'मास्टर' मणिमालायाः २२६ संख्यको मणिः
( आख्यायिकाविभागे ३ )

# सावित्र्युपाख्यानम्

'प्रियंवदा'ख्य-टीकयाऽलंकृतम्

[ 'ज्ञानश्री'परीक्षायां पाठ्यत्वेन स्वीकृतम् ]


टीकाकारः—
पं० श्री ब्रह्मानन्दशुक्लः
साहित्याचार्यः, व्याकरणालङ्कारशास्त्री च



प्रकाशकः—
मास्टर खेलाड़ीलाल ऐण्ड सन्स
संस्कृत बुकडिपो,
कचौड़ीगली, बनारस-१

मूल्यम् १।)

'मास्टर' मणिमालायाः २२६ संख्यको मणिः ( आख्यायिका वि० ३ )

काशिक-राजकीय-संस्कृत-'ज्ञानश्री' परीक्षायां पाठ्यत्वेन निर्द्धारितम्

# सावित्र्युपाख्यानम्

'प्रियंवदा'ख्यटीकयाऽलंकृतम्

[ महाभारतवनपर्वान्तर्गत-अध्याय २९४--३०० पर्यन्तम् ]

टीकाकारः—

श्रीब्रह्मानन्दशुक्लः

साहित्याचार्यः, व्याकरणालङ्कारशास्त्री, काव्यतीर्थश्च ।

—:०:—

प्रकाशकः—

मास्टर खेलाड़ीलाल ऐण्ड सन्स,

संस्कृत बुकडिपो,

कचौड़ीगली, बनारस-१

—०—

प्रथमं संस्करणम् ] सन् १९५२ ई० [ मूल्यम् १।)

॥ श्रीहरिः ॥

# सावित्र्युपाख्यानम् ।

## [ "प्रियंवदा"ख्य-टीकयाऽलङ्कृतम् ]

यत्पाद-पङ्कज-विनिर्गत-वारिबिन्दु-
संस्पर्श-लेश-वशतोऽपि सदा जगत्त्रयम् ।
विध्वंसमेति दुरितौघ-ततिर्जनस्य,
तं पुण्यकीर्तनमहं शिरसा नतोऽस्मि ॥ १ ॥

नारायणं नमस्कृत्य, नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव, ततो जयमुदीरयेत् ॥ २ ॥

[ अयं कथाभागो महाभारतीय-"वनपर्व" गत-"पतिव्रता-माहात्म्यात्", संगृहीतः । द्रौपद्या अनुजैश्च सह धर्मराजो युधिष्ठिरो वने निवसति स्म, कथाप्रसङ्गे एकदा तेन श्रीमार्कण्डेयो मुनिः सविनयं पृष्टः— ]

[ यह कथा भाग महाभारतीय "वन-पर्व" के "पतिव्रतामाहात्म्य" से लिया गया है । द्रौपदी तथा अपने अनुजों के साथ धर्मराज युधिष्ठिर वन में निवास करते थे । कथा—प्रसङ्ग में एक दिन उन्होंने श्रीमार्कण्डेय मुनि जी महाराज से कहा— ]

### युधिष्ठिर उवाच—

युधिष्ठिर ने कहा—

नात्मानमनुशोचामि, नेमान् भ्रातॄन् महामुने ! ।
हरणं चापि राज्यस्य, यथेमां द्रुपदात्मजाम् ॥ १ ॥

अन्वयः—हे महामुने ! ( अहं ) यथा इमां द्रुपदात्मजामनुशोचामि, ( तथा ) न आत्मानम् , न इमान् भ्रातॄन् , न च राज्यस्य हरणम् ( अनुशोचामि ) ॥ १ ॥

व्याख्या—हे महामुने ! = महर्षे ! ( अहम् ) यथा = येन प्रकारेण, इमां

द्रुपदात्मजाम् = द्रुपद-पुत्रीं द्रौपदीम् अनुशोचामि = चिन्तयामि, ( तथा = ) तेन प्रकारेण न आत्मानम् = स्वात्मानम् , न च इमान् = एतान् भ्रातॄन् = स्वानुजान् , न च राज्यस्य हरणम् , अनुशोचामि ॥ १ ॥

भावार्थः—हे महामुने मार्कण्डेय ! यादृशः शोको मम इमां द्रौपदीं दृष्ट्वा भवति, न तथा स्वस्य दशां विलोक्य, न वा भ्रातॄणां दुरवस्थां विचार्य भवति। राज्यापहरणेनापि मम महती चिन्ता नास्ति। राज्यन्तु सति बले पुनरपि ग्रहीतुं शक्यते, परं द्रौपद्याः केश-ग्रहणादिना सभायां सञ्जातं तिरस्कारमवलोक्य शोको मां अत्यन्तं पीडयति। अस्माभिर्वृथा "वीर" नामधारिभिः किञ्चिदपि वीरोचितं कर्म नैव कृतम्। इत्येव मम शोकः ॥ १ ॥

हिन्दी—महामुनि जी ! मुझे इस द्रौपदी को देखकर जितना शोक होता है, उतना न अपने आपको और न अपने इन छोटे भाइयों को देखकर ही होता है। राज्य नष्ट हो जाने की भी मुझे इतनी चिन्ता नहीं है। ( राज्य तो शक्ति होने पर फिर भी प्राप्त किया जा सकता है। परन्तु द्रौपदी का अपमान किस प्रकार भुलाया जा सकता है ) ॥ १ ॥

द्यूते दुरात्मभिः क्लिष्टाः, कृष्णया तारिताः वयम्।
जयद्रथेन च पुनर्वनाच्चापि हृता बलात् ॥ २ ॥

अन्वयः—द्यूते दुरात्मभिः क्लिष्टा वयम् कृष्णया तारिताः, पुनश्च जयद्रथेन ( इयम् ) बलात् वनात् हृता ॥२॥

व्याख्या—द्यूते = दुरोदर—क्रीडायां, दुरात्मभिः = दुष्टैः ( कौरवैः ) क्लिष्टाः = सन्तापिताः, वयम् कृष्णया = द्रौपद्यैव तारिताः=दुःखसागरात्पारे कृताः। पुनश्च दुष्टजयद्रथेन इयम् द्रौपदी बलात् = बलेन, वनात्=अरण्यात् हृता=नीता।

भावार्थः—यादृशं दुःखं अनया स्वजीवने लब्धम् , न तादृशमन्यया कयापि लब्धं भवेत्। यतः—पूर्वं द्यूतक्रीडायां दुष्टैः कौरवैर्वयं क्लेशिताः, तत्रापि च अनयैव वयं दुःखान्मोचिताः। [ धृतराष्ट्रं प्रसाद्य पाण्डवाः संकटान्मोचिताः इति महाभारतकथा ] पुनश्च वने दुष्टजयद्रथेन इयं अपहृता ॥२॥

हिन्दी—द्यूत-क्रीडा में दुष्टों ने जिस समय हम लोगों को सताया था, तब भी द्रौपदी ने ही महाराज धृतराष्ट्र को प्रसन्न कर, वर मांग कर, अपने पतियों को

दासता के बन्धन से मुक्त कराया था। बाद में वन में बलपूर्वक पापी जयद्रथ ने इस को हर लिया था॥ २॥

अस्ति सीमन्तिनी काचिद्, दृष्टपूर्वाऽपि वा श्रुता।
पतिव्रता महाभागा, यथेयं द्रुपदात्मजा॥ ३॥

अन्वयः—इयं महाभागा द्रुपदात्मजा यथा पतिव्रता अस्ति, काचित् सीमन्तिनी (एवंविधा) दृष्टपूर्वा श्रुताऽपि वा ? ॥३॥

व्याख्या—इयं महाभागा = परम-सौभाग्य-शालिनी द्रुपदात्मजा = द्रुपदतनया द्रौपदी, यथा = यादृशी, पतिव्रता अस्ति। किम् अन्या काऽपि सीमन्तिनी नारी, (सीमन्तः—केशवेषः सोऽस्या अस्तीति सीमन्तिनी)। (कच्चित् भवता) दृष्टपूर्वा = पूर्वं दृष्टा ? अपि वा = अथवा श्रुता ? ॥ ३ ॥

भावार्थः—यादृशी पतिव्रता इयं परमसौभाग्यवती द्रौपदी वर्तते, तादृशी भवता काचिदन्या नारी दृष्टा श्रुता वा ? असीम-कष्टजातमपि न गणयन्ती पति-सेवा-परा अन्या काचिन्नास्तीति भावः॥ ३॥

हिन्दी—यह परम सौभाग्यशालिनी द्रौपदी जैसी पतिव्रता है, क्या कोई अन्य नारी आपने ऐसी कभी पहले देखी ? अथवा सुनी है ? ॥ ३ ॥

मार्कण्डेय उवाच—

मार्कण्डेय ने कहा—

शृणु राजन्! कुलस्त्रीणां, महाभाग्यं युधिष्ठिर!
सर्वमेतद् यथा प्राप्तं, सावित्र्या राजकन्यया॥ ४॥

अन्वयः—हे राजन् युधिष्ठिर! राजकन्यया सावित्र्या सर्वमेतत् कुलस्त्रीणां महाभाग्यं यथा प्राप्तं (तत् त्वं) शृणु॥ ४॥

व्याख्या—हे राजन्! युधिष्ठिर! राजकन्यया = राजपुत्र्या, सावित्र्या, सर्वम् = अखिलम्, एतत् = इदं, कुलस्त्रीणां = सुकुलोत्पन्नकामिनीनां, महाभाग्यम् = सौभाग्यजन्यं सुकृतम्, यथा = येन प्रकारेण, प्राप्तम् = स्वीकृतम्, तत् सर्वं अहं कथयामि (त्वं) शृणु॥ ४॥

भावार्थः—हे राजन्! सौभाग्यवतीनां नारीणां पतिसेवारूपं व्रतं सम्यक् स्वीकृत्य यत् सुकृतं अश्वपतेः राज्ञः कन्यया सावित्र्या प्राप्तं, तदहं विस्तरेण कथयामि, सावधानतया, श्रूयताम्॥ ४॥

हिन्दी—राजन् ! राजपुत्री सावित्री ने कुलदेवियों के "पतिव्रत" के द्वारा जिस अद्भुत सौभाग्य को जिस प्रकार प्राप्त किया था, वह मैं सुनाता हूँ, सुनो ! ॥

आसीन्मद्रेषु धर्मात्मा, राजा परमधार्मिकः ।
ब्रह्मण्यश्च महात्मा च, सत्यसन्धो जितेन्द्रियः ॥ ५ ॥

यज्वा दानपतिर्दक्षः, पौरजानपदप्रियः ।
पार्थिवोऽश्वपतिर्नाम, सर्वभूत-हिते रतः ॥ ६ ॥

क्षमावाननपत्यश्च, सत्यवाग्विजितेन्द्रियः ।
अतिक्रान्तेन वयसा, सन्तापमुपजग्मिवान् ॥ ७ ॥

अन्वयः—मद्रेषु धर्मात्मा, परमधार्मिकः, ब्रह्मण्यश्च, महात्मा च, सत्यसन्धः, जितेन्द्रियः, यज्वा, दानपतिः, दक्षः, पौरजानपदप्रियः, सर्वभूतहिते रतः, क्षमावान्, सत्यवाक्, विजितेन्द्रियः, अश्वपतिः नाम पार्थिवः आसीत् । ( स च ) अनपत्यः, ( अत एव ) अतिक्रान्तेन वयसा सन्तापमुपजग्मिवान् ॥ ५-६-७ ॥

व्याख्या—"मद्र"संज्ञकदेशे धर्मात्मा = धर्मशीलः, परमधार्मिकः—धार्मिकेषु श्रेष्ठः, ब्रह्मण्यः = ब्राह्मणानां हितैषी = सेवकः, महात्मा = उदारः, सत्यसन्धः = सत्या सन्धा प्रतिज्ञा यस्य सः, सत्यप्रतिज्ञः, जितेन्द्रियः = जितानि स्ववशे कृतानि इन्द्रियाणि येन सः, वशी, यज्वा = विधिपूर्वकं यज्ञकर्ता, 'यज्वा तु विधिनेष्टवान्" इति कोषः । दानपतिः = देयद्रव्यस्य स्वामी, सर्वदा दानप्रेमी इत्यर्थः, दक्षः = क्षिप्रकारी, पौरजानपदप्रियः = पौराणां नागरिकाणां जानपदानां देशवासिनाञ्च प्रियः, हितकर्ता, सर्वभूतहिते रतः—प्राणिनां हिते रतः = संलग्नः, क्षमाशीलः, सत्यवाक् = सत्यवादी, विजितेन्द्रियः = जितेन्द्रियः, अश्वपतिः इति नामा पार्थिवः = राजा आसीत् । स च दुर्दैववशात् , अनपत्यः = सन्तानरहितः, ( अत एव ) अतिक्रान्तेन = गतवता वयसा = अवस्थया, सन्तापं = खेदं सन्तानस्य अभावात् सञ्जातं दुःखं, उपजग्मिवान् = प्रपेदे ॥ ५-६-७ ॥

भावार्थः—"मद्र" संज्ञक-देशेषु "अश्वपतिः" नाम भूपो बभूव । स च अनेकैर्गुणैः शोभितः, दाता, ब्राह्मणानां हितैषी, प्रजापालकः, धर्मात्मा, जितेन्द्रियः, सत्यवचनः, सर्व-हितकारी आसीत् , परन्तु दुर्दैववशात् तस्य सन्ततिर्नाभूत्,

अतः सः क्षीयमाणे वयसि सन्तापं प्राप । सन्तानं विना सर्वोऽपि लौकिकः पदार्थः शून्य इव भवतीति भावः ॥ ५-६-७ ॥

हिन्दी—"मद्र" देश में "अश्वपति" नाम का एक राजा था। वह अनेक विशिष्ट गुणों से विभूषित, बड़ा प्रतापी, दाता, ब्राह्मणों का सन्मान करने वाला, प्रजा का पालक, धर्मात्मा, जितेन्द्रिय, सत्यभाषी तथा सब का हितैषी था। दुर्दैववश बहुत समय तक भी कोई सन्तान न होने के कारण वह अत्यन्त सन्तप्त रहने लगा ॥ ५-६-७ ॥

अपत्योत्पादनार्थं च, तीव्रं नियममास्थितः।
काले परिमिताहारो, ब्रह्मचारी जितेन्द्रियः ॥ ८ ॥
हुत्वा शतसहस्रं स, सावित्र्या राजसत्तम !।
षष्ठ षष्ठे तदा काले, बभूव मितभोजनः ॥ ९ ॥

अन्वयः—हे राजसत्तम ! सः अपत्योत्पादनार्थं नियमम् आस्थितः ब्रह्मचारी जितेन्द्रियः काले परिमिताहारः ( सन् ) सावित्र्याः शतसहस्रं हुत्वा तदा षष्ठे षष्ठे काले मितभोजनः बभूव ॥८–९॥

व्याख्या – हे राजसत्तम ! = राजश्रेष्ठ ! सः = अश्वपतिः, अपत्यस्य = सन्ततेः उत्पादनार्थं = उत्पत्तये, नियमम् = व्रतानुष्ठानादिकम्, आस्थितः = स्वीकृत्य, ब्रह्मचारी जितेन्द्रियः = वशी सन् काले = नियमितसमये एव परिमिताहारः = परिमित-भोजनः सन् सावित्र्याः = गायत्र्याः शतसहस्रं एकलक्षं हुत्वा = गायत्रीमन्त्रेण एकलक्षसंख्यया हवनं विधाय तदा = तस्मिन् समये षष्ठे षष्ठे काले = दिवसस्य अष्टधा विभागं कृत्वा षष्ठे समये एव प्रतिदिनं मितभोजनः = परिमित-भोक्ता बभूव = अभूत् ।

भावार्थः—हे राजन् ! स अश्वपतिः जितेन्द्रियः सन् विविधम् अनुष्ठाना-दिकं कृत्वा सन्तानोत्पादनाय प्रयत्नं कृतवान् । दिनस्य षष्ठे अंशे परिमितभोजनं करोतिस्म। एवं अनेकैः क्लेशैः शरीरं दुर्बलं विधाय गायत्रीमन्त्रेण एकलक्ष-हवनं करोतिस्म ॥८–९॥

हिन्दी—राजन् ! राजा अश्वपति ने सन्तान उत्पन्न करने के लिये नियमों व्रतानुष्ठानादिकों का पालन किया। ब्रह्मचारी, जितेन्द्रिय रहकर वह नियमित

समय पर परिमित भोजन करता था । इस प्रकार उसने गायत्री मन्त्र से एक लक्ष हवन किया । वह दिन के आठ भाग बनाकर छठे भाग में भोजन किया करता था ॥

एतेन नियमेनासीद्, वर्षाण्यष्टादशैव तु ।
पूर्णे त्वष्टादशे वर्षे, सावित्री तुष्टिमभ्यगात् ॥१०॥

अन्वयः—एतेन नियमेन तु अष्टादश एव वर्षाणि (यावत्) स आसीत् । अष्टादशे वर्षे पूर्णे तु सावित्री तुष्टिं अभ्यगात् ॥१०॥

व्याख्या—एतेनैव = अनेनैव नियमेन स अश्वपतिः अष्टादश वर्षाणि यावत् आसीत् = अभूत् अष्टादशे वर्षे पूर्णे तु जाते सावित्री = गायत्री देवी तुष्टिं = सन्तोषं अभ्यगात् = जगाम ॥१०॥

भावार्थः—एवं नियमपालनैः तस्य राज्ञः अष्टादशवर्षाणि व्यतीतानि । यदा च अष्टादश वर्षाणि पूर्णानि सञ्जातानि तदा भगवती गायत्री देवी प्रसन्ना सञ्जाता ॥१०॥

हिन्दी—इस प्रकार राजा ने अट्ठारह वर्षों तक नियम पालन किया । अट्ठारह वर्ष पूर्ण हो जाने पर भगवती गायत्री देवी सन्तुष्ट हो गईं ॥१०॥

रूपिणी तु तदा राजन् ! दर्शयामास तं नृपम् ।
अग्निहोत्रात्समुत्थाय, हर्षेण महताऽन्विता ॥
उवाच चैनं वरदा, वचनं पार्थिवं तदा ॥११॥

अन्वयः—हे राजन् ! तदा रूपिणी (सती सा गायत्री) तं नृपं (स्वं) दर्शयामास । अग्निहोत्रात् समुत्थाय महता हर्षेण अन्विता, वरदा च (सती) तदा एनं पार्थिवं वचनं उवाच ॥११॥

व्याख्या—हे राजन् ! तदा तु=तस्मिन् समये तु (सा भगवती सावित्री देवी) रूपिणी भूत्वा = प्रत्यक्षं रूपं धृत्वा तं नृपं=राजानम् (स्वं) दर्शयामास = स्वकीयं रूपं दर्शितवती । अग्निहोत्रात् = हवन-कुण्डात् समुत्थाय = प्रकटीभूय महता = अधिकेन, हर्षेण = प्रसन्नतया, अन्विता = सहिता, वरदा च सती = वरदायिनी सती तदा एनं पार्थिवं वक्ष्यमाण-प्रकारेण वचनं = वाक्यं उवाच = कथितवती ॥११॥

भावार्थः—राजन् ! प्रत्यक्षं रूपं विधाय प्रसादिता सा भगवती राजानं वरं दातुं महता हर्षेण युक्ता अग्निकुण्डात् समुत्थाय उवाच ॥११॥

हिन्दी—राजन् ! इस प्रकार प्रसन्न होने पर भगवती सावित्री ने प्रत्यक्ष रूप धारण कर राजा को दर्शन दिया, और बड़ी प्रसन्नता पूर्वक अग्निकुण्ड से उठ कर राजा से कहना आरम्भ किया ॥११॥

सावित्र्युवाच—

सावित्री ने कहा—

ब्रह्मचर्येण शुद्धेन, दमेन नियमेन च ।
सर्वात्मना च भक्त्या च, तुष्टास्मि तव पार्थिव ! ॥१२॥
वरं वृणीष्वाश्वपते !, मद्रराज ! यदीप्सितम् ।
न प्रमादश्च धर्मेषु, कर्तव्यस्ते कथंचन ॥१३॥

अन्वयः—हे पार्थिव ! शुद्धेन ब्रह्मचर्येण, दमेन नियमेन च, सर्वात्मना भक्त्या च तव तुष्टास्मि । हे मद्रराज ! अश्वपते ! यत् ईप्सितं ( तत् ) वरं वृणीष्व, ते धर्मेषु कथंचन प्रमादः च न कर्तव्यः ॥१२–१३॥

व्याख्या—हे पार्थिव != राजन् ! शुद्धेन=सत्येन वास्तविकेन इत्यर्थः, ब्रह्मचर्येण, दमेन = इन्द्रियाणां निरोधेन, नियमेन च = व्रतानुष्ठानादिना च, सर्वात्मना = सर्वप्रकारेण भक्त्या = मयि प्रीत्या च तव तुष्टास्मि = प्रसन्नास्मि । हे मद्रराज ! = मद्रदेशाधिप ! अश्वपते ! यत् ते ईप्सितम् = अभीष्टं वरं अस्ति, तत् वृणीष्व = मत्तो गृहाण । ते त्वया धर्मेषु अवश्यकर्तव्येषु धार्मिककृत्येषु कथंचन = कथमपि प्रमादः = अनवधानता च न कर्तव्यः = न विधेयः ॥१२–१३॥

भावार्थः—हे मद्रदेशाधिपते ! अश्वपते ! तव निश्छलेन ब्रह्मचर्येण, इन्द्रियाणां दमेन, मयि प्रेमातिशयेन च अहं प्रसन्नास्मि । स्वाभिलषितं वरं वृणीष्व, अहं तवेच्छां पूरयिष्यामि । परं धार्मिक-कृत्येषु कदापि त्वया प्रमादो न विधेयः । "धर्मान्न प्रमदितव्य" मिति भावः ॥१२–१३॥

हिन्दी—राजन् ! तुम्हारे वास्तविक ब्रह्मचर्य-पालन, इन्द्रियदमन, और मुझ में यथार्थ दृढ़ भक्ति से, मैं प्रसन्न हूँ । तुम अपनी कामना के अनुसार मुझ से वर माँग लो । ( ध्यान रहे ) धर्म में कभी भी प्रमाद न करना । प्रमादी पुरुष कभी सुखी नहीं हो सकता ॥१२–१३॥

अश्वपतिरुवाच—

अश्वपति ने कहा—

"अपत्यार्थः समारम्भः, कृतो धर्मेप्सया मया।
पुत्रा मे बहवो देवि! भवेयुः कुलभावनाः ॥१४॥

अन्वयः—हे देवि ! मया धर्मेप्सया अपत्यार्थः समारम्भः कृतः। मे कुल-भावनाः बहवः पुत्राः भवेयुः ॥ १४ ॥

व्याख्या—हे देवि ! मया धर्मस्येप्सया = धर्मस्येच्छया अपत्यस्य = सन्तानस्य अर्थाय कृते सन्तानाय इति यावत्, समारम्भः = कार्यारम्भः कृतो = विहितः। मम इयमिच्छास्ति, यत् मे = मम कुल-भावनाः = वंशवृद्धिकराः बहवः = अनेके पुत्राः भवेयुः = स्युः ॥ १४ ॥

भावार्थः—हे देवि ! मया सन्तानार्थं अयं धर्मस्य आरम्भः कृतः। अहन्तु कामये-मम वंशस्य वृद्धिकारिणः अनेके पुत्रा मम स्युरिति ॥१४॥

हिन्दी—हे देवि ! धर्म की इच्छा से मैंने सन्तान की प्राप्ति के लिये यह नियमादि पालन कार्य आरम्भ किया है। मेरे वंश की वृद्धि करनेवाले अनेक पुत्र मुझे मिलने चाहिये ॥ १४ ॥

तुष्टासि यदि मे देवि!, वरमेतं वृणोम्यहम्।
सन्तानं परमो धर्म, इत्याहुर्मां द्विजातयः ॥ १५ ॥

अन्वयः—हे देवि ! यदि ( त्वं ) मे तुष्टासि, अहं एतं वरं वृणोमि, "सन्तानं परमो धर्मः" इति द्विजातयः माम् आहुः ॥ १५ ॥

व्याख्या—हे देवि ! यदि चेत् त्वं मे = ममोपरि तुष्टा प्रसन्ना असि, तदा = अहम् एतं पूर्वोक्तं वरं वृणोमि = वरं कामये, द्विजातयः = ब्राह्मणाः "सन्तानं परमो धर्मः" = सन्ततिरेव परमो धर्मः इति मां आहुः = कथयन्ति ॥ १५ ॥

भावार्थः—हे देवि ! यदि त्वं मयि प्रसन्ना, तर्हि पूर्वोक्तं वरं देहि, यतो ब्राह्मणैः प्रतिबोधितोऽस्मि यत् "सन्तानात्परतरः कोऽपि धर्मो नास्ति" इति। ततश्च पुत्र-धर्मेप्सुरहं नान्यधर्माभिलाषीति पुत्र-धर्मार्थं वरप्रदानं क्रियतामिति हृदयम् ॥१५॥

हिन्दी—हे देवि ! यदि तुम मुझ पर प्रसन्न हो, तो मुझे ऊपर कथित वर ही प्रदान करो। मुझे ब्राह्मणों ने "सन्तान ही वास्तविक धर्म है" समझा रखा है। पुत्र के बिना कोई भी धर्मकार्य नहीं हो सकता, अतः उसकी ही मुझे इच्छा है ॥

सावित्र्युवाच—

सावित्री ने कहा—

पूर्वमेव मया राजन्नभिप्रायमिमं तव ।
ज्ञात्वा पुत्रार्थमुक्तो वै, भगवांस्ते पितामहः ॥ १६ ॥

अन्वयः—हे राजन् ! पूर्वमेव मया तव इमं अभिप्रायं ज्ञात्वा भगवान् पितामहः ते पुत्रार्थं वै उक्तः ॥ १६ ॥

व्याख्या—हे राजन् ! पूर्वमेव = तव कथनात् प्रथममेव मया तव = भवतः इमं = अमुं अभिप्रायं ज्ञात्वा = विदित्वा ते = तव पुत्रार्थं = पुत्र-दानार्थं भगवान् पितामहः = ब्रह्मा वै = निश्चयेन उक्तः = कथितः ॥ १६ ॥

भावार्थः—हे राजन् ! मया तव कथनात् पूर्वमेव "पुत्रार्थं त्वं नियमादि-पालनं करोषि" इति विज्ञाय पुत्रप्रदानार्थं भगवान् विधाता मया प्रार्थितः । अतस्त्वया अस्मिन् विषये महती चिन्ता न कार्या ॥ १६ ॥

हिन्दी—हे राजन् ! मैंने पहले ही तुम्हारे इस अभिप्राय को समझकर पुत्र प्रदान के निमित्त भगवान् ब्रह्मा जी से कहा है ॥ १६ ॥

प्रसादाच्चैव तस्मात्ते, स्वयंभु-विहिताद् भुवि ।
कन्या तेजस्विनी सौम्य ! क्षिप्रमेव भविष्यति ॥ १७ ॥

अन्वयः—सौम्य ! तस्मात् ते स्वयम्भुविहितात् प्रसादात् च एव भुवि तेजस्विनी कन्या क्षिप्रमेव भविष्यति ॥१७॥

व्याख्या—हे सौम्य ! = भद्र ! तस्मात्=ततः ते=तव स्वयम्भु–विहितात् = स्वयं भवतीति स्वयम्भुः, तेन विहितात् = सम्पादितात् = दत्तात् इत्यर्थः, प्रसादात् चैव भुवि = पृथिव्यां तेजस्विनी = तेजोवती कन्या = पुत्री क्षिप्रमेव भविष्यति=शीघ्र मेव उत्पत्स्यते ॥ १७ ॥

भावार्थः—हे सौम्य राजन् ! स्वयं विधात्रा दत्तात् प्रसादात् पृथिव्याम् परम-तेजस्विनी कन्या शीघ्रमेव तव भविष्यति ॥ १७ ॥

हिन्दी—सौम्य ! तुम्हारे लिये दिये गये ब्रह्मा जी के प्रसाद से पृथिवी में परम तेजस्विनी कन्या तुम्हारे शीघ्र ही उत्पन्न होगी ॥ १७ ॥

उत्तरं च न ते किंचिद्, व्याहर्तव्यं कथंचन ।

पितामह-निसर्गेण, तुष्टा ह्येतद् ब्रवीमि ते ॥ १८ ॥

अन्वयः—ते किञ्चित् उत्तरञ्च कथञ्चन न व्याहर्त्तव्यम् । ( अहं ) हि पितामहनिसर्गेण तुष्टा ( सती ) एतत् ते ब्रवीमि ॥ १८ ॥

व्याख्या—ते = त्वया किञ्चित् = किमपि उत्तरं कथञ्चन = कथमपि नैव व्याहर्त्तव्यम् = वक्तव्यम्, हि = यतः पितामहस्य = विधातुः निसर्गेण = इच्छया तुष्टा = प्रसन्ना सती एतत् = इदं ते = तव ब्रवीमि = कथयामि ॥ १८ ॥

भावार्थः—राजन् ! अतः परं त्वया किमपि न वक्तव्यम्, यतः, प्रसन्नया मया विधातुरिच्छयैव एवमुक्तम् ॥ १८ ॥

हिन्दी—राजन् ! इस से अधिक और कुछ अब तुम्हें नहीं कहना चाहिये । प्रसन्न होकर मैंने विधाता की इच्छा से ही ऐसा कहा है ॥ १८ ॥

मार्कण्डेय उवाच—

मार्कण्डेय ने कहा—

स तथेति प्रतिज्ञाय, सावित्र्या वचनं नृपः ।
प्रसादयामास पुनः, क्षिप्रमेतद् भविष्यति ॥ १९ ॥

अन्वयः—स नृपः सावित्र्या वचनं "तथा" इति प्रतिज्ञाय, क्षिप्रमेतद् भविष्यति इति पुनः प्रसादयामास ॥ १९ ॥

व्याख्या—स नृपः = अश्वपतिः सावित्र्या = देव्या वचनं = वाक्यं "तथा" एवमेव भविष्यति, अन्यत्, किमपि नैव वदिष्यामीत्यर्थः, इति प्रतिज्ञाय = प्रतिज्ञां कृत्वा क्षिप्रं = शीघ्रं एतत् = भवत्याः कथनं भविष्यति इति पुनः ( तां ) प्रसादयामास = प्रसन्नां चकार ॥ १९ ॥

भावार्थः—स राजा भवत्या वचनं स्वीकरोमि, अधिकं नैव वदिष्यामीति प्रतिज्ञां विधाय, "देवि ! एतस्य वरदानस्य पूर्तिः सत्वरं भविष्यतीति कृपा विधेया" इति पुनस्तां भगवतीं प्रसादयामास । "वरप्रदानं शीघ्रं सफलं भवतु" इति प्रार्थयामास इति भावः ॥ १९ ॥

हिन्दी—उस राजा ने सावित्री देवी के वचन को "ऐसा ही होगा" ऐसी प्रतिज्ञा कर, इसकी पूर्ति शीघ्र ही होनी चाहिये, इसके लिए भगवती को पुनः प्रसन्न किया ॥१९॥

अन्तर्हितायां सावित्र्यां, जगाम स्वपुरं नृपः।
स्वराज्ये चावसद् वीरः, प्रजा धर्मेण पालयन् ॥२०॥

अन्वयः---( एवमुक्त्वा ) सावित्र्यां अन्तर्हितायां नृपः स्वपुरं जगाम। वीरः प्रजाः धर्मेण पालयन् स्वराज्ये अवसत् च ॥२०॥

व्याख्या—एवं वरं दत्त्वा सावित्र्या अन्तर्हितायां=विलीनायां नृपः=राजा स्वपुरं=स्वनगरं जगाम=ययौ। वीरः सः प्रजाः धर्मेण=धर्मपूर्वकं पालयन् स्वराज्ये=स्वकीये राज्ये च अवसत्=निवासं चकार ॥२०॥

भावार्थः---एवं वरं प्रदाय यदा भगवती देवी सावित्री विलीना, तदा राजा स्वनगरे समागतः धर्मेण प्रजायाः पालनं च कृतवान् ॥२०॥

हिन्दी---इस प्रकार वर देकर भगवती के चले जाने पर राजा ने अपने नगर में आकर धर्मपूर्वक प्रजा का पालन करना आरम्भ कर दिया ॥२०॥

कस्मिंश्चित्तु गते काले, स राजा नियतव्रतः।
ज्येष्ठायां धर्मचारिण्यां, महिष्यां गर्भमादधे ॥२१॥

अन्वयः— कस्मिंश्चित् काले गते तु नियतव्रतः स राजा ज्येष्ठायां धर्मचारिण्यां महिष्यां गर्भमादधे ॥२१॥

व्याख्या—कस्मिंश्चित् काले=समये गते तु=किंचित् कालानन्तरं नियतव्रतः =धर्माचरणादिनियमवान् स राजा=अश्वपतिः ज्येष्ठायां धर्मचारिण्यां=धर्माचरणं कुर्वन्त्यां महिष्यां=प्रधान-धर्मपत्न्यां गर्भमादधे=दधौ ॥२१॥

भावार्थः—किञ्चित् कालानन्तरं स राजा स्वप्रधानधर्मपत्न्यां गर्भाधानमकरोत् ॥ २१ ॥

हिन्दी—कुछ समय के अनन्तर उस राजा ने धर्माचरण करनेवाली अपनी प्रधान पत्नी में गर्भाधान किया ॥२१॥

राज-पुत्र्यास्तु गर्भः स, मानव्या भरतर्षभ!
व्यवर्धत तदा शुक्ले तारापतिरिवाम्बरे ॥२२॥

अन्वयः—हे भरतर्षभ! तदा मानव्याः राजपुत्र्याः स गर्भस्तु शुक्ले अम्बरे तारापतिरिव व्यवर्धत ॥२२॥

व्याख्या—हे भरतर्षभ ! = भरतश्रेष्ठ ! तदा = तस्मिन् समये मानव्याः=मनु-वंशाङ्कुरायाः मनुपुत्र्या इति यावत्, राजपुत्र्याः स गर्भः शुक्ले पक्षे अम्बरे = आकाशे तारापतिरिव = चन्द्र इव व्यवर्धत = वृद्धिं ययौ ॥२२॥

भावार्थः—हे भरतश्रेष्ठ राजन् ! तस्मिन् काले यथा शुक्लपक्षे प्रतिदिनं क्रमशश्चन्द्रो वर्धते, तथा तस्या राज्ञ्याः स गर्भो ववृधे ॥२२॥

हिन्दी—हे राजन् युधिष्ठिर ! उस समय, शुक्लपक्ष में जिस प्रकार आकाश में प्रतिदिन चन्द्रमा बढ़ता है, ऐसे ही उस रानी का वह गर्भ बढ़ने लगा ॥२२॥

प्राप्ते काले तु सुषुवे, कन्यां राजीवलोचनाम् ।
क्रियाश्च तस्या मुदितः, श्चक्रे च नृपसत्तमः ॥२३॥

अन्वयः—प्राप्ते काले तु ( सा ) राजीवलोचनां कन्यां सुषुवे । ( सः ) नृपसत्तमः मुदितः तस्याः क्रियाश्च चक्रे ॥२३॥

व्याख्या—प्राप्ते काले = प्रसव-समये इत्यर्थः ( सा ) राज्ञी राजीव-लोचनां = राजीववत् कमलवत् लोचने नेत्रे यस्यास्ताम् पङ्कजाक्षीं कन्यां सुषुवे=प्रसूतवती । ( सः ) नृपसत्तमः = राजश्रेष्ठः अश्वपतिः मुदितः=प्रहृष्टः सन् तस्याः = कन्यकायाः जातकर्मादिक्रियाः चक्रे = सम्पादयामास ॥ २३ ॥

भावार्थः—सति प्रसव-समये तया राज्ञ्या पङ्कजाक्षी कन्या प्रसूता । पित्रा च तस्याः सर्वाः जातकर्मादिक्रियाः कृताः ॥ २३ ॥

हिन्दी—प्रसव काल उपस्थित होने पर रानी ने बहुत सुन्दरी कमल के समान नेत्रोंवाली कन्या को जन्म दिया । पिता ने उसके सब जातकर्मादि संस्कार भली भाँति सम्पादित किये ॥ २३ ॥

सावित्र्या प्रीतया दत्ता, सावित्र्या हुतया ह्यपि ।
सावित्रीत्येव नामास्याश्चक्रुर्विप्रास्तथा पिता ॥ २४ ॥

अन्वयः—सा प्रीतया हुतया च सावित्र्या दत्ता ( इति हेतोः ) विप्रा अस्या नाम "सावित्री" इत्येव चक्रुः । तथा पिताऽपि ॥ २४ ॥

व्याख्या—सा = कन्या प्रीतया = प्रसन्नया हुतया = अग्निहोत्रद्वारा प्रसादितया इत्यर्थः, सावित्र्या = भगवत्या गायत्री-देव्या दत्ता इति हेतोः विप्राः = पुरोहितादयो ब्राह्मणाः अस्याः "सावित्री" इत्येव नाम चक्रुः, तथैव पिता अपि "सावित्री"त्येव नाम कृतवान् ॥ २४ ॥

भावार्थः—सा कन्या हवनद्वारा प्रसन्नया भगवत्या सावित्र्या दत्ता इति हेतोः, पित्रा, ब्राह्मणैश्च तस्या नाम "सावित्री" इत्येव कृतम् ॥ २४ ॥

हिन्दी—वह कन्या यज्ञ, हवनादि से प्रसन्न होकर भगवती सावित्री ने ही वर रूप में दी थी, इसी लिये पिता एवं ब्राह्मणों ने उसका नाम "सावित्री" ही रखा ॥२४॥

सा विग्रहवतीव श्री,र्व्यवर्धत नृपात्मजा ।
कालेन चापि सा कन्या, यौवनस्था बभूव ह ॥२५॥

अन्वयः—सा नृपात्मजा विग्रहवती श्रीरिव व्यवर्धत । अपि च कालेन सा कन्या यौवनस्था बभूव ॥ २५ ॥

व्याख्या—सा नृपात्मजा = नृपपुत्री विग्रहवती = शरीरिणी श्रीः=लक्ष्मीः इव व्यवर्धत = ववृधे, अपि च=किंच–कालेन=समयेन किंचित्–कालानन्तरमित्यर्थः, सा कन्या यौवनस्था बभूव = यौवनस्थायां पदमधात् ॥ २५ ॥

भावार्थः—सा नृप कन्या शरीरधारिणी लक्ष्मीः इव प्रतिदिनं वृद्धिं लेभे, क्रमशश्च युवावस्थायां प्रविष्टा ॥२५॥

हिन्दी—वह राजकन्या शरीर धारण की हुई लक्ष्मी के समान प्रतिदिन बढ़ने लगी । क्रमशः उसने युवावस्था में प्रवेश किया ॥ २५ ॥

तां सुमध्यां पृथुश्रोणीं, प्रतिमां काञ्चनीमिव ।
प्राप्तेयं देवकन्येति, दृष्ट्वा संमेनिरे जनाः ॥ २६ ॥

अन्वयः—तां सुमध्यां पृथुश्रोणीं काञ्चनीं प्रतिमां इव दृष्ट्वा जनाः इयं देवकन्या प्राप्ता, इति संमेनिरे ॥ २६ ॥

व्याख्या—तां सुमध्यां = शोभनमध्यभागां, पृथुश्रोणीं = पृथुनितम्बां, काञ्चनीं =सुवर्णरचितां प्रतिमां=देवमूर्तिमिव दृष्ट्वा=अवलोक्य जनाः=लोका "इयं देवकन्या" काचिद् देवकन्या इति संमेनिरे = ज्ञातवन्तः ॥२६॥

भावार्थः—तां सुन्दरीं कन्यां दृष्ट्वा "इयं काचित् देवकन्या" इति लोकैः ज्ञातम् ॥२६॥

हिन्दी—सुन्दर मध्यवाली तथा पृथुल नितम्ब वाली सुवर्ण की प्रतिमा के तुल्य उस राजपुत्री को देख कर लोगों ने "यह कोई देवकन्या है" ऐसा समझना आरम्भ कर दिया ॥२६॥

तां तु पद्मपलाशाक्षीं, ज्वलन्तीमिव तेजसा।
न कश्चिद् वरयामास, तेजसा प्रतिवारितः ॥२७॥

अन्वयः—तु तां पद्मपलाशाक्षीं तेजसा ज्वलन्तीमिव तेजसा प्रतिवारितः कश्चिदपि न वरयामास ॥२७॥

व्याख्या—तु=किन्तु तां पद्मपलाशाक्षीं=पद्मपत्रतुल्यनेत्रां, तेजसा=स्वप्रतापेन ज्वलन्तीमिव = देदीप्यमानामिव, तेजसा = प्रतापेन प्रतिवारितः ( इव ) = अवरुद्ध इव कश्चिदपि राजपुत्रो न वरयामास = पत्नीत्वेन न स्वीचकार ॥२७॥

भावार्थः—किन्तु तां परमसुन्दरीं तेजस्विनीं तस्यास्तेजो बलेनैव प्रतिरुद्ध इव कोऽपि राजकुमारो न स्वीचकार ॥२७॥

हिन्दी—किन्तु अति तेजस्विनी उस परमसुन्दरी कन्या को किसी भी राजपुत्र ने पत्नी के रूप में स्वीकार नहीं किया, मानो वह उस कन्या के तेज से रुक जाता था ॥ २७ ॥

अथोपोष्य शिरःस्नाता, देवतामभिगम्य सा।
हुत्वाऽग्निं विधिवद् विप्रान् वाचयामास पर्वणि ॥ २८ ॥

अन्वयः—अथ उपोष्य शिरःस्नाता सा देवतामभिगम्य, पर्वणि विधिवत् अग्निं हुत्वा विप्रान् वाचयामास ॥ २८ ॥

व्याख्या—अथ=अनन्तरं उपोष्य=उपवासं कृत्वा शिरःस्नाता=शिरःप्रक्षालन-पूर्वकं कृतस्नाना देवतामभिगम्य=देवतायाः इष्ट-देवतायाः पूजां विधाय, पर्वणि = पूर्णिमायां अन्यस्मिन् कस्मिंश्चित् पर्वदिने वा, विधिवत् = यथाशास्त्रं अग्निं = वह्निं हुत्वा = अग्नि-होत्रं विधाय इत्यर्थः, विप्रान् = ब्राह्मणान् वाचयामास = स्वस्तिवाचनं कारयामास इत्यर्थः ॥ २८ ॥

भावार्थः—अथ सा यदा केनापि नाङ्गीकृता, तदा स्वेष्टदेवताराधनं कृत्वा सौभाग्यावरोधकान् विघ्नसमूहान् दूरीकर्तुं पर्वणि शिरसा स्नानं विधाय, देवता-मन्दिरे गत्वा विप्रैः स्वस्ति-वाचनं कारयामास ॥ २८ ॥

हिन्दी—इसके अनन्तर उसने किसी पर्व के दिन शिर से स्नान, और उपवास कर देवता का पूजन किया । विधिवत् अग्निहोत्र किया और ब्राह्मणों के द्वारा स्वस्तिवाचन कराया ॥२८॥

ततः सुमनसः शेषाः, प्रतिगृह्य महात्मनः ।
पितुः समीपमगम-, द्देवी श्रीरिव रूपिणी ॥२९॥

अन्वयः—ततः शेषाः सुमनसः प्रतिगृह्य रूपिणी श्रीः इव सा महात्मनः पितुः समीपम् अगमत् ॥ २९ ॥

व्याख्या—ततः = अनन्तरं शेषाः = अवशिष्टाः देवतार्चनतोऽवशिष्टाः प्रसाद-रूपेण प्राप्ताः, सुमनसः = पुष्पाणि प्रतिगृह्य = गृहीत्वा, रूपिणी = शरीरिणी श्रीः = लक्ष्मीः इव, सा = सावित्री महात्मनः = महोदारस्य पितुः समीपमगमत् = जगाम ॥

भावार्थः—अनन्तरं सा देवता-प्रसादरूपेण लब्धानि पुष्पाण्यादाय पितुः समीपमगमत् । तदा सा विग्रहवती लक्ष्मीरिव प्रतीयते स्म ॥ २९ ॥

हिन्दी—इसके अनन्तर वह सावित्री देवता के प्रसाद में प्राप्त पुष्पों को लेकर अपने पिता के पास गई । उस समय वह साक्षात् शरीरधारिणी लक्ष्मी के समान प्रतीत होती थी ॥ २९ ॥

साभिवाद्य पितुः पादौ, शेषाः पूर्वं निवेद्य च ।
कृताञ्जलिर्वरारोहा, नृपतेः पार्श्वमास्थिता ॥ ३० ॥

अन्वयः—सा वरारोहा पितुः पादौ अभिवाद्य शेषाः पूर्वं निवेद्य च कृताञ्जलिः नृपतेः पार्श्वम् आस्थिता ॥३०॥

व्याख्या—सा वरारोहा=सुन्दरी, पितुः=अश्वपतेः, पादौ=चरणौ अभिवाद्य= प्रणम्य, शेषाः = प्रसादरूपेण प्राप्तानि कुसुमानि पूर्वं = प्रथमं निवेद्य = राज्ञे समर्प्य कृताञ्जलिः = बद्धाञ्जलिः सती, नृपतेः = राज्ञः पार्श्वं = समीपे, आस्थिता = तस्थौ ॥

भावार्थः—ततः सा स्वपितुः समीपे उपेत्य ( गत्वा ) पुष्पप्रदानपूर्वकं प्रणामं कृत्वा बद्धाञ्जलिः सविधे ( समीपे ) स्थिता ॥३०॥

हिन्दी—इसके अनन्तर वह सुन्दरी अपने पिता के समीप जाकर प्रणाम-पूर्वक प्रसाद-पुष्पों को समर्पित कर वहीं हाथ बाँधकर खड़ी हो गई ॥३०॥

यौवनस्थां तु तां दृष्ट्वा, स्वां सुतां देवरूपिणीम् ।
अयाच्यमानां च वरै, र्नृपतिर्दुःखितोऽभवत् ॥३१॥

अन्वयः—नृपतिः देव-रूपिणीं तां स्वां सुतां वरैः अयाच्यमानां यौवनस्थां च दृष्ट्वा दुःखितः अभवत् ॥३१॥

व्याख्या—नृपतिः = राजा देवरूपिणी = दिव्यरूपां तां स्वां = स्वकीयां सुत, पुत्रीं वरैः = राजपुत्रैः अयाच्यमानां = अप्रार्थ्यमानां यौवनस्थां युवावस्थायां विद्यमानां च दृष्ट्वा = अवलोक्य दुःखितोऽभवत् = अभूत् ॥३१॥

भावार्थः—राजा अश्वपतिर्यौवन-सम्पन्नां केनाऽपि न याच्यमानां च सुतां अवलोक्य नितान्तं दुःखितो जातः। मदीया इयं पुत्री इदानीं यौवने प्रविष्टा कोऽपि च एनां नाङ्गीकरोति, किं करोमीति चिन्ताकुलो जात इति भावः ॥३१॥

हिन्दी—राजा ने जब पुत्री को देखा कि यह अब विवाह के योग्य हो चली है, और कोई राजपुत्र इसे चाहता नहीं है, तो उसे प्रबल चिन्ता हुई ॥३१॥

राजोवाच—

राजा ने कहा—

पुत्रि ! प्रदानकालस्ते, न च कश्चिद् वृणोति माम्।
स्वयमन्विच्छ भर्तारं, गुणैः सदृशमात्मनः ॥३२॥

अन्वयः—हे पुत्रि ! ( अयं ) ते प्रदानकालः, न च ( त्वदर्थम् ) कश्चित् मां वृणोति। ( अतः ) आत्मनः गुणैः सदृशं भर्तारं स्वयम् अन्विच्छ ॥३२॥

व्याख्या—हे पुत्रि ! अयं ते प्रदानस्य दानस्य विवाहस्य इत्यर्थः, कालः समयः अस्तीति शेषः, न च ( किन्तु ) कश्चिदपि = कोऽपि राज-पुत्रः ( त्वदर्थम् त्वां स्वीकर्तुं ) मां च न वृणोति = न प्रार्थयते, अतः आत्मनः = स्वस्य गुणैः सदृशं = समानं भर्तारं = पतिं स्वयमेव अन्विच्छ = अन्वेषय ॥३२॥

भावार्थः—हे पुत्रि ! इदानीं तव विवाहस्य कालो वर्तते, परन्तु कोऽपि राजपुत्रः त्वां याचितुं मां न प्रार्थयते, ब्राह्मणादिद्वारा प्रार्थनां नैव करोति इति हेतोः त्वम् स्वयमेव आत्मतुल्यं पतिं अन्वेषय ॥३२॥

हिन्दी—पुत्रि ! अब तेरे विवाह का समय आगया है, किन्तु कोई भी राजपुत्र तेरे लिये मुझसे प्रार्थना नहीं करता है, अतः अपने समान गुणों वाले पति को तू स्वयं ढूँढ ले ॥३२॥

प्रार्थितः पुरुषो यश्च, स निवेद्यस्त्वया मम।
विमृश्याहं प्रदास्यामि, वरय त्वं यथेप्सितम् ॥३३॥

अन्वयः—हे पुत्रि ! यश्च पुरुषः प्रार्थितो भवेत्, स त्वया मम निवेद्यः, अहं विमृश्य प्रदास्यामि, त्वं यथेप्सितं वरय ॥३३॥

[व्]याख्या—हे पुत्रि ! यश्च = कोऽपि पुरुषः त्वया प्रार्थितः = अभ्यर्थितो भवेत्, सः त्वया मम निवेद्यः = मम सम्मुखे स कथनीय. तस्य सूचना मह्यं देया इत्यर्थः। अहं विमृश्य = उचितानुचितं विचार्य (तस्मै त्वां)। प्रदास्यामि अतः त्वं यथेप्सितं = यथेच्छं वरय = स्वेच्छया पतिं स्वीकुरु इति भावः ॥३३॥

भावार्थः—पुत्रि ! यं कमपि पुरुषं त्वं वृणोषि, तस्य सूचना पूर्वं मह्यं देया, अहं सर्वं उचितमनुचितं वा विचार्य तस्मै त्वां प्रदास्यामि। अतः यथेच्छं त्वं पतिं स्वीकुरु ॥ ३३ ॥

हिन्दी—बेटी ! जिस किसी पुरुष को तू पसन्द करे, उसकी सूचना मुझे देना, मैं विचार कर तुझको उसे दूंगा ॥३३॥

श्रुतं हि धर्मशास्त्रेषु, पठ्यमानं द्विजातिभिः।
तथा त्वमपि कल्याणि ! गदतो मे वचः शृणु ॥३४॥

अन्वय.—हि धर्मशास्त्रेषु द्विजातिभिः पठ्यमानं यथा (मया) श्रुतम्। हे कल्याणि ! तथा त्वमपि गदतो मे वचः शृणु ॥३४॥

व्याख्या—हि = यतः धर्मशास्त्रेषु = मन्वादिप्रणीत-धर्मग्रन्थेषु, द्विजातिभिः = ब्राह्मणैः पठ्यमानं = कथ्यमानं, यथा मया श्रुतम्, हे कल्याणि ! = सौभाग्यवति ! तथा = तेनैव प्रकारेण, गदतः = कथयतः, मे = मम वचः = वचनं, [त्]वं शृणु ॥ ३४ ॥

भावार्थः—हे सौभाग्यवति ! पुत्रि ! मया ब्राह्मणानां मुखेभ्यः धर्मशास्त्रेषु [यत्] श्रुतम्, इदानीं तदेव कथयामि, त्वं सावधानतया शृणु ॥३४॥

हिन्दी—हे सौभाग्यवती ! पुत्री ! मैंने ब्राह्मणों के द्वारा धर्मशास्त्रों में जो [कु]छ सुना है, मैं तुझे सुनाता हूँ, तू सावधान होकर सुन ॥३४॥

किं श्रुतम् ? इत्याह—

"अप्रदाता पिता वाच्यो, वाच्यश्चानुपयन् पतिः।
मृते भर्तरि पुत्रश्च, वाच्यो मातुररक्षिता" ॥३५॥

अन्वयः—अप्रदाता पिता वाच्यः (भवति) अनुपयन् पतिश्च वाच्यः, [भर्त]रि मृते च मातुः अरक्षिता पुत्रः वाच्यः ॥३५॥

व्याख्या—अप्रदाता = विवाहयोग्यायाः कन्यायाः योग्यवराय अप्रदाता पिता [वा]च्यः = निन्दनीयः, अनुपयन् = पत्नीमस्वीकुर्वाणः ऋतुस्नातायाः समीपे न गच्छन्

पतिः वाच्यः = शोचनीयः, भर्तरि=पत्यौ मृते सति च मातुः = स्वजनन्याः अरक्षिता = अपालयिता पुत्रश्च, वाच्यो = निन्दनीयो भवति ॥३५॥

भावार्थः--यः पिता विवाहयोग्यां पुत्रीं योग्यवराय न ददाति, स निन्दनीयो भवति, यश्च पतिः पत्नीं नोपगच्छति, ऋतुस्नातां नानुगच्छति, सोऽपि निन्द्यः, पत्यौ मृते पुत्रो यदि स्वमातरं न रक्षति तदा सोऽपि निन्दा-भाजनं भवति ॥३५॥

हिन्दी--विवाह के योग्य कन्या को योग्य वर के लिये न देने वाला पिता निन्दा का पात्र होता है, और अपनी पत्नी को स्वीकार–ऋतुस्नान के बाद सत्कृत– नहीं करनेवाला पति, एवं पति की मृत्यु के अनन्तर माता की रक्षा न करनेवाला पुत्र निन्दा के पात्र होते हैं ॥३५॥

इदं मे वचनं श्रुत्वा, भर्तुरन्वेषणे त्वर।
देवतानां यथा वाच्यो, न भवेयं तथा कुरु ॥३६॥

अन्वयः—इदं मे वचनं श्रुत्वा भर्तुः अन्वेषणे त्वर, (अहम्) यथा देवतानां वाच्यो न भवेयं, तथा कुरु ॥३६॥

व्याख्या—पुत्रि! मे = मम इदं = वचनं कथनं श्रुत्वा = आकर्ण्य (त्वं) भर्तुः = स्वपत्युः अन्वेषणे त्वर = त्वरां–शीघ्रतां–कुरु। यथा च = येन प्रकारेण च (अहम्) देवतानां वाच्यो = निन्दनीयो न भवामि = न स्याम् तथा कुरु ॥३६॥

भावार्थः—पुत्रि! इदानीं त्वं मदीयं वचनं निशम्य शीघ्रतया स्वपतिं अन्वेषय, अन्यथा देवा अपि मम निन्दां करिष्यन्ति, यथा च ते मम निन्दां न कुर्वन्ति, तथा त्वया शीघ्रतया कार्यं कर्तव्यम् ॥३६॥

हिन्दी—बेटी! मेरे इस वचन को सुनकर तू अपने पति के अन्वेषण के लिये शीघ्रता कर। और जिस प्रकार देवता मेरी निन्दा न करें, ऐसा कार्य कर। अब विलम्ब करने से देवताओं में भी मैं निन्दनीय बन जाऊँगा ॥३६॥

मार्कण्डेय उवाच—

मार्कण्डेय जी ने कहा—

एवमुक्त्वा दुहितरं, तथा वृद्धांश्च मन्त्रिणः।
व्यादिदेशानुयात्रं च, गम्यतामित्यचोदयत् ॥३७॥

अन्वयः—(स राजा) दुहितरं एवमुक्त्वा, तथा वृद्धान् मन्त्रिणश्च व्यादिदेश, अनुयात्रं च "गम्यताम्" इति अचोदयत् ॥३७॥

व्याख्या—( स राजा ) अश्वपतिः दुहितरं = कन्यां एवम् = इत्थमुक्तप्रकारेण उक्त्वा = कथयित्वा 'तथा' = एवमस्तु इति वृद्धान् = ज्येष्ठान् मन्त्रिणः = सचिवान् व्यादिदेश = आदिष्टवान् , अनुयात्रं = सेनादिकं यात्रोपयुक्तं साधनं "गम्यताम्" = सावित्रीमनुगच्छतु इति अचोदयत् = आज्ञापयामास ॥३७॥

भावार्थः—राज्ञा अश्वपतिना सावित्रीं प्रति एवमुक्तम् । वृद्धाः मन्त्रिणश्च "तथा" एवमेव भवद्भिरपि अस्या भावोऽवगन्तव्यः इति प्रबोधिताः । सेना च अस्याः पृष्ठतो गच्छतु इति च आज्ञां ददौ । 'सावित्र्या सह यात्रोचितानि साधनानि गच्छन्तु' इत्युक्तवान् इति भावः ॥३७॥

हिन्दी—राजा ने अपनी पुत्री से इस प्रकार कहा और बूढ़े मन्त्रियों को भी "ऐसा विचार है" यह समझा दिया 'सावित्री के साथ यात्रा के योग्य सभी सेना आदि अपेक्षित साधन जायँ" ऐसी आज्ञा दी ॥३७॥

साभिवाद्य पितुः पादौ, व्रीडितेव तपस्विनी ।
पितुर्वचनमाज्ञाय, निर्जगामाविचारितम् ॥३८॥

अन्वयः—( सा ) तपस्विनी पितुः पादौ अभिवाद्य व्रीडिता इव ( सती ) पितुः वचनं आज्ञाय अविचारितम् निर्जगाम ॥३८॥

व्याख्या— सा तपस्विनी = सावित्री पितुः = स्वजनकस्य पादौ = चरणौ अभिवाद्य = प्रणम्य व्रीडिता इव = लज्जिता इव सती, पितुर्वचनश्रवणात् लज्जिता सा अभूत् इति तत्त्वम् । पितुः वचनं = वाक्यं, आज्ञाय = ज्ञात्वा, स्वीकृत्य इत्यर्थः अविचारितम् = यथा स्यात्तथा, एतस्मिन् विषये किमप्यविचार्य इत्यर्थः, निर्जगाम = ययौ, दिक्षु विदिक्षु च स्व-भर्तुरन्वेषणाय गता इति यावत् ॥३८॥

भावार्थः—सा राजकन्या सावित्री एवं पितुर्वचनं निशम्य लज्जितेव पितरं प्रणम्य, विशेषविचारं विनैव स्वपतिमन्वेष्टुं निर्गता ॥३८॥

हिन्दी—सावित्री इस प्रकार अपने पिता के वचन सुनकर कुछ लज्जित सी होकर अपने पिता के चरणों में प्रणाम कर और अधिक इस विषय में न विचार कर पति के अन्वेषण के निमित्त चल पड़ी ॥३८॥

सा हैमं रथमास्थाय, स्थविरैः सचिवैर्वृता ।
तपोवनानि रम्याणि, राजर्षीणां जगाम ह ॥३९॥

अन्वयः—सा हैमं रथं आस्थाय, स्थविरैः सचिवैः वृता ( सती ) राजर्षीणां रम्याणि तपोवनानि जगाम ह ॥३९॥

व्याख्या— सा = सावित्री हैमं = सुवर्ण-निर्मितं रथं = स्यन्दनं आस्थाय = आरुह्य, स्थविरैः = वृद्धैः सचिवैः वृता = सहिता, राजर्षीणां तपस्यां कुर्वतां = राजऋषीणां, रम्याणि = मनोहराणि तपोवनानि जगाम = ययौ ह । "ह" इति पौराणिकशैल्यां पूरकमव्ययं भवति ॥३९॥

भावार्थः— ततः वृद्धैर्मन्त्रिभिः सहिता सा सुवर्णनिर्मितं रथमारुह्य तपस्यतां राजर्षीणां परममनोहराणि तपोवनानि ययौ ॥३९॥

हिन्दी—इसके बाद में सावित्री अपने बूढ़े मन्त्रियों के साथ सुवर्ण के रथ पर चढ़कर राजर्षियों के रमणीय तपोवन का दर्शन करने के लिये गई ॥३९॥

मान्यानां तत्र वृद्धानां, कृत्वा पादाभिवादनम् ।
वनानि क्रमशस्तात !, सर्वाण्येवाभ्यगच्छत ॥४०॥

अन्वयः—तत्र मान्यानां वृद्धानां पादाभिवादनं कृत्वा हे तात ! ( युधिष्ठिर ! ) क्रमशः सर्वाणि एव वनानि अभ्यगच्छत ॥४०॥

व्याख्या—हे तात ! = युधिष्ठिर ! तत्र = तेषु स्थानेषु सावित्री मान्यानां = सम्माननीयानां वृद्धानां = स्थविराणां पादाभिवादनं = पादयोः चरणयोः अभिवादनं वन्दनं कृत्वा, क्रमशः = यथाक्रमम् सर्वाणि = अखिलानि एव वनानि अभ्यगच्छत = जगाम ॥४०॥

भावार्थ —तात युधिष्ठिर ! एवं सा राजकन्या तत्र-तत्र वनेषु, वृद्धानां माननीयानां राजर्षीणां, पादयोः प्रणामं कृत्वा, क्रमशः सर्वाणि तपोवनानि अवलोकयितुं गता ॥४०॥

हिन्दी—प्यारे युधिष्ठिर ! इस प्रकार वह कन्या सावित्री उन तपोवनों में माननीय वृद्ध तपस्वियों के चरणों में प्रणामकर, क्रमशः सभी तपोवनों में गई ॥

एवं तीर्थेषु सर्वेषु, धनोत्सर्गं नृपात्मजा ।
कुर्वती द्विजमुख्यानां, तं तं देशं जगाम ह ॥४१॥

अन्वयः—( सा ) नृपात्मजा एवं सर्वेषु तीर्थेषु धनोत्सर्गं कुर्वती, द्विजमुख्यानां तं तं देशं जगाम ह ॥४१॥

व्याख्या—सा नृपात्मजा = राजपुत्री एवं = अनेन प्रकारेण सर्वेषु = निखिलेषु तीर्थेषु धनोत्सर्गं = धनस्य वित्तस्य उत्सर्गं दानं कुर्वती सती द्विजमुख्यानां = द्विजेषु मुख्यानां ब्राह्मणानां तं तं देशं = प्रत्येकं स्थानं जगाम ह = प्रयाता। यथा तया राजर्षीणां तपोवनानि अवलोकितानि तथैव ब्रह्मर्षीणामपि तानि तानि तपोवनानि अवलोकयामास इति भावः ॥४१॥

भावार्थः—सा अनेन प्रकारेण तपस्विभ्यः अपेक्षित-धनादि प्रदाय अन्येषां ब्रह्मर्षीणामपि तपोवनानि अवलोकयितुं जगाम ॥४१॥

हिन्दी—इस प्रकार वह राजकन्या समस्त आश्रमों में धन प्रदान करती हुई ब्रह्मर्षियों के प्रत्येक आश्रम में गई ॥४१॥

प्रथमोध्यायः समाप्तः।

—:०:—

## अथ द्वितीयोऽध्यायः [ २ ]

मार्कण्डेय उवाच—

मार्कण्डेय ने कहा—

अथ मद्राधिपो राजा, नारदेन समागतः।
उपविष्टः सभामध्ये, कथायोगेन भारत ! ॥ १ ॥

अन्वयः—हे भारत ! अथ मद्राधिपः राजा नारदेन समागतः, कथायोगेन सभामध्ये उपविष्टः ॥ १ ॥

व्याख्या—हे भारत ! = युधिष्ठिर ! अथ = कदाचित् मद्राधिपः = मद्रदेशाधिपः राजा = अश्वपतिः नारदेन सह समागतः = सङ्गतः सहित इत्यर्थः, कथायोगेन = कथाप्रसङ्गेन सभामध्ये = सभायां उपविष्टः = आसीदिति शेषः ॥१॥

हिन्दी—मार्कण्डेयजी ने कहा, हे युधिष्ठिर ! एक वार महामुनि नारदजी के साथ वार्तालाप करते हुए मद्रदेश के स्वामी राजा अश्वपति अपनी सभा में बैठे थे ॥ १ ॥

ततोऽभिगम्य तीर्थानि, सर्वाण्येवाश्रमांस्तथा।
आजगाम पितुर्वेश्म, सावित्री सह मन्त्रिभिः ॥ २ ॥

अन्वयः—ततः सर्वाणि तीर्थानि तथा ( सर्वान् ) आश्रमान् अभिगम्य सावित्री मन्त्रिभिः सह पितुः वेश्म आजगाम ॥ २ ॥

व्याख्या—ततः = तदनन्तरं सर्वाणि = सम्पूर्णानि तीर्थानि = तीर्थस्थानानि तथा सर्वान् आश्रमान् = तपःस्थानानि अभिगम्य सावित्री मन्त्रिभिः सह = सचिवैः सह पितुः वेश्म = गृहं आजगाम = समाययौ ॥ २ ॥

हिन्दी—इसके कुछ समय के अनन्तर सावित्री सम्पूर्ण तीर्थ और आश्रमों में भ्रमण कर मन्त्रियों के साथ अपने पिता के घर लौट आई ॥ २ ॥

नारदेन सहासीनं, सा दृष्ट्वा पितरं शुभा ।
उभयोरेव शिरसा, चक्रे पादाभिवादनम् ॥ ३ ॥

अन्वयः—शुभा सा, नारदेन सह आसीनं पितरं दृष्ट्वा ( स्व- ) शिरसा उभयोरेव पादाभिवादनं चक्रे ॥ ३ ॥

व्याख्या—शुभा = कल्याणी सौभाग्यवती सा = सावित्री, नारदेन = मुनिना, सह = सार्धं "साकं सार्धं समं सह" इति कोषः । आसीनं = उपविष्टं, पितरं, दृष्ट्वा, स्वशिरसा = शिरोनत्त्वा, उभयोरेव = द्वयोरेव, पादाभिवादनं = पादयोः अभिवादनं = प्रणामं चक्रे = चकार ॥ ३ ॥

हिन्दी—कल्याणी सावित्री ने एक ही स्थान में दोनों को बैठे देख कर दोनों ही के चरणों में शिर झुकाकर सविनय प्रणाम निवेदन किया ॥ ३ ॥

नारद उवाच—

नारद ने कहा—

"क्व गताऽभूत् सुतेयं ते, कुतश्चैवागता नृप !
किमर्थं युवतीं भर्त्रे, न चैनां संप्रयच्छसि ॥ ४ ॥"

अन्वयः—हे नृप ! इयं ते सुता क्व गता अभूत् ? कुतः आगता च ? युवतीं एनां च भर्त्रे किमर्थं न संप्रयच्छसि ? ॥ ४ ॥

व्याख्या—हे नृप ! = राजन् ! इयं = एषा ते = तव सुता क्व = कुत्र गता अभूत् ? कुतः = कस्मात् स्थानाच्च आगता ? युवतीं = प्राप्तयौवनां एनां = इमां भर्त्रे = अस्याः वराय किमर्थं = कथं न संप्रयच्छसि = ददासि ? विवाहयोग्यायाः कन्यकाया वराय सम्प्रदानमुचितम्, नतु इतस्ततो भ्रमणम्, तत् इत्थं किमर्थं इयं भ्रमतीति हृदयम् ॥ ४ ॥

हिन्दी—हे राजन्! यह तुम्हारी पुत्री कहाँ गयी थी? और कहाँ से आ रही है? अब तो यह युवती हो गयी है, इस को किसी योग्य वर को क्यों नहीं देते? [ विवाह योग्य कन्याओं का इधर-उधर घूमते रहना उचित नहीं है। इसका विवाह कर देना ही चाहिये था, क्यों नहीं किया? ] ॥ ४ ॥

अश्वपतिरुवाच—

अश्वपति ने कहा—

कार्येण खल्वनेनैव, प्रेषिताऽद्यैव चागता।
एतस्याः शृणु देवर्षे! भर्तारं योऽनया वृतः ॥ ५ ॥

अन्वयः—हे देवर्षे! अनेनैव कार्येण प्रेषिता खलु अद्यैव च आगता। एतस्याः भर्तारं शृणु, यः अनया वृतः ॥ ५ ॥

व्याख्या—हे देवर्षे! = नारद! अनेनैव = एतेनैव कार्येण = वरस्यान्वेषण-रूपेण कार्येण हेतुना इयं प्रेषिता खलु = प्रहिता किल, अद्यैव च आगता = समागता, एतस्याः = अस्याः भर्तारं = पतिं शृणु = आकर्णय, यः = भर्ता अनया = सावित्र्या वृतः = स्वेच्छया अङ्गीकृतः। इतो गता यं वरं वृतवती, तस्य विषये भवताऽपि सर्वं शुभाशुभं विचार्य वक्तव्यम् इति भावः ॥ ५ ॥

हिन्दी—देवर्षे! इसी विवाह कार्य के निमित्त इस कन्या को भेजा था, कृपया आप भी सुनिये, जिस वर को इस ने अपनी इच्छा से वरा है, वह उचित भी है या नहीं ॥ ५ ॥

मार्कण्डेय उवाच—

मार्कण्डेय ने कहा—

सा ब्रूहि विस्तरेणेति, पित्रा संचोदिता शुभा।
तदैव तस्य वचनं, प्रतिगृह्येदमब्रवीत् ॥ ६ ॥

अन्वयः—सा शुभा "विस्तरेण ब्रूहि" इति पित्रा संचोदिता तदैव तस्य वचनं प्रतिगृह्य इदम् अब्रवीत् ॥ ६ ॥

व्याख्या—सा शुभा = सौभाग्यवती "विस्तरेण ब्रूहि" = विस्तारपूर्वकं कथय, इति = एवं पित्रा = जनकेन, संचोदिता = प्रेरिता सती, तदैव = तस्मिन्नेव समये तस्य = राज्ञः वचनं = वाक्यं प्रतिगृह्य = स्वीकृत्य इदम् = वक्ष्यमाणं अब्रवीत् = उक्तवती ॥ ६ ॥

हिन्दी—राजा के "विस्तृत वर्णन कर" इस प्रकार कहने पर उसी समय उस कन्या ने कहना प्रारम्भ किया ॥ ६ ॥

सावित्र्युवाच—

सावित्री ने कहा—

आसीच्छाल्वेषु धर्मात्मा, क्षत्रियः पृथिवीपतिः ।
"द्युमत्सेन" इति ख्यातः, पश्चाच्चान्धो बभूव ह ॥ ७ ॥

अन्वयः—शाल्वेषु धर्मात्मा "द्युमत्सेनः" इति ख्यातः क्षत्रियः पृथिवीपतिः आसीत्, पश्चात् च ( सः ) अन्धो बभूव ॥ ७ ॥

व्याख्या—शाल्वेषु देशेषु धर्मात्मा = धार्मिकः "द्युमत्सेनः" इति ख्यातः = इति नाम्ना प्रसिद्धः क्षत्रियः, पृथिवीपतिः = राजा आसीत्, च = किन्तु पश्चात् ( सः ) अन्धो बभूव = नेत्ररहितो जातः ॥ ७ ॥

हिन्दी—"शाल्व" देश में एक "द्युमत्सेन" नाम का परम धार्मिक क्षत्रिय राजा था । किन्तु ( किसी दुर्दैववश ) वह वृद्धावस्था में नेत्र-विहीन हो गया ॥ ७ ॥

विनष्टचक्षुषस्तस्य, बालपुत्रस्य धीमतः ।
सामीप्येन हृतं राज्यं, छिद्रेऽस्मिन् पूर्ववैरिणा ॥ ८ ॥

अन्वयः—विनष्टचक्षुषः बालपुत्रस्य धीमतः तस्य अस्मिन् छिद्रे ( संजाते ) सामीप्येन पूर्ववैरिणा राज्यं हृतम् ॥ ८ ॥

व्याख्या—विनष्टचक्षुषः = विनष्टे नष्टे चक्षुषी नेत्रे यस्य तस्य अन्धस्य, बालपुत्रस्य बालः = शिशुः पुत्रो यस्य तस्य, धीमतः = बुद्धिमतः, तस्य = द्युमत्सेनस्य अस्मिन् = नेत्रहीनत्वरूपे छिद्रे = दोषे सञ्जाते सामीप्येन = समीप-वर्तिना केनाऽपि पूर्ववैरिणा = पूर्वशत्रुणा राज्यं हृतम् = बलात् स्वहस्ते नीतम् ॥ ८ ॥

हिन्दी - राजा अन्धा है और उसका पुत्र भी अभी बालक ही है, इसी छिद्र के मिल जाने से पास के ही किसी पूर्व शत्रु ने उसका राज्य भी छीन लिया ॥

स बालवत्सया सार्धं, भार्यया प्रस्थितो वनम् ।
महारण्यं गतश्चापि, तपस्तेपे महाव्रतः ॥ ९ ॥

अन्वयः—बालवत्सया भार्यया सार्धं वनं प्रस्थितः, स महाव्रतः सन् महारण्यं गतश्च तपः तेपे ॥ ९ ॥

व्याख्या—बालवत्सया = बालः शिशुः वत्सः पुत्रो यस्याः तया, भार्यया = धर्मपत्न्या सार्धं = सह वनं प्रस्थितः = अरण्यं प्रविष्टः स महाव्रतः = महान्ति बहूनि व्रतानि चान्द्रायणादीनि व्रतानि यस्य सः, अङ्गीकृत-बहुव्रतः सन् महारण्यं = महद् वनं गतश्च तपः तेपे = तपश्चर्यामाचचार ॥ ९ ॥

हिन्दी—वह छोटे पुत्रवाली अपनी पत्नी के साथ वन में जाकर अनेक प्रकार के चान्द्रायणादि व्रत करते हुए तप करने लगा ॥ ९ ॥

तस्य पुत्रः पुरे जातः, संवृद्धश्च तपोवने ।
सत्यवाननुरूपो मे, भर्तेति मनसा वृतः ॥१०॥

अन्वयः—पुरे जातः तपोवने संवृद्धश्च तस्य पुत्रः "सत्यवान्" मे अनुरूपः "भर्ता" इति ( मया ) मनसा वृतः ॥१०॥

व्याख्या—पुरे = नगरे जातः = समुत्पन्नः तपोवने च संवृद्धः = वृद्धिं प्राप्तः, तस्य = राजर्षेः, पुत्रः "सत्यवान्" मे = मम अनुरूपः = अनुकूलः, "भर्ता"=पतिः, इति मया मनसा = चित्तेन, वृतः = स्वीकृतः ॥१०॥

हिन्दी—उसका पुत्र, जो नगर में ही उत्पन्न हुआ था, अब वन में रहते हुए वृद्ध को प्राप्त हो गया है, युवा है, मेरे अनुकूल है, अतः मैंने अपने मन से उसको अपना पति स्वीकार कर लिया है ॥१०॥

नारद उवाच—

नारदजी ने कहा—

अहो बत ! महत् पापं, सावित्र्या नृपते ! कृतम् ।
अजानन्त्या यदनया, गुणवान् सत्यवान् वृतः ॥११॥

अन्वयः—हे नृपते ! अहो बत ! सावित्र्या महत् पापं कृतम्, यदनया अजानन्त्या गुणवान् सत्यवान् वृतः ॥११॥

व्याख्या—हे नृपते ! = राजन् ! अहो बत ! = महत् कष्टं यतः, सावित्र्या महत् = प्रबलं पापं कृतम् = महाननर्थः कृतः । यत् अनया = सावित्र्या अजा-

नन्त्या = अज्ञातया गुणवान् = गुणी सत्यवान् वृतः। यथा अनया ज्ञातं, तथा नास्ति, तस्य वरणे महान् दोषो वर्तते। अतः अनया महती त्रुटिः कृता। इति हृदयम् ॥११॥

हिन्दी—राजन्! अज्ञानवश सावित्री से बड़ा पाप हो गया है। जिस सत्यवान् को इसने गुणी समझकर पति रूप में स्वीकार किया है, वह ऐसा नहीं है ॥११॥

सत्यं वदत्यस्य पिता, सत्यं माता प्रभाषते।
तथाऽस्य ब्राह्मणाश्चक्रु, र्नामैतत्सत्यवानिति ॥१२॥

अन्वयः—अस्य पिता सत्यं वदति, तथा माता सत्यं प्रभाषते, अतः ब्राह्मणा अस्य एतन्नाम "सत्यवान्" इति चक्रुः ॥१२॥

व्याख्या—अस्य पिता सत्यं वदति, = सर्वदा सत्यभाषणं करोति, तथा माता = जननी, सत्यं प्रभाषते, = सत्यं वदति, अत एवं ब्राह्मणा एतत् = इदं अस्य "सत्यवान्" इति नाम चक्रुः = कृतवन्तः ॥१२॥

हिन्दी—इसके पिता एवं माता सदा सत्य भाषण करती हैं, अतः ब्राह्मणों ने इसका यह "सत्यवान्" नाम किया है ॥१२॥

बालस्याश्वाः प्रियाश्चास्य, करोत्यश्वांश्च मृन्मयान्।
चित्रेऽपि विलिखत्यश्वां, "श्चित्राश्व" इति कथ्यते ॥१३॥

अन्वयः—बालस्य अस्य अश्वाः प्रिया आसन्, मृन्मयान् अश्वांश्च अस्य करोति, चित्रे अपि अश्वान् विलिखति, इति (हेतोः) "चित्राश्वः" इति च उच्यते ॥१३॥

व्याख्या—बालस्य = बाल्यावस्थायां वर्तमानस्य अस्य = सत्यवतः अश्वाः = वाजिनः प्रियाः = मनोहराः आसन्, मृन्मयान् = मृत्तिकामयान् अश्वान् च अस्य = स्वात्मनः क्रीडनार्थे करोति = निर्माति स्म, चित्रे = आलेख्ये च अश्वान् विलिखति इति हेतोः "चित्राश्वः" इति च उच्यते = कथ्यते, अस्य अपरं नाम "चित्राश्वः" इत्यप्यस्ति इति भावः ॥१३॥

हिन्दी—बाल्यावस्था में इसको घोड़े बहुत प्रिय लगते थे, मिट्टी के घोड़े बनाकर यह खेलता था, कभी कभी चित्रों में भी घोड़े बनाया करता था, इसलिये इस सत्यवान् का नाम "चित्राश्व" भी रख दिया गया है ॥१३॥

राजोवाच—

राजा ने कहा—

अपीदानीं स तेजस्वी, बुद्धिमान्वा नृपात्मजः ।
क्षमावानपि वा शूरः, सत्यवान् पितृवत्सलः ॥१४॥

अन्वयः—( हे मुने ! ) अपि स नृपात्मजः इदानीं तेजस्वी, बुद्धिमान्, वा ? ( अस्ति ) वा सत्यवान्, पितृवत्सलः, क्षमावान्, शूरः ? ( अस्ति ) ॥१४॥

व्याख्या—( हे मुने ! ) अपि किं स नृपात्मजः = नृपपुत्रः इदानीं = सम्प्रति तेजस्वी = तेजोयुक्तः, बुद्धिमान् वा अस्ति ? वा अपि च स सत्यवान् पितृवत्सलः = पितृभक्तः, क्षमावान् = क्षमाशीलः, शूरः = पराक्रमी अप्यस्ति ? ॥१४॥

हिन्दी—हे मुने ! क्या वह नृपपुत्र सत्यवान् अब तेजस्वी, बुद्धिमान्, पिता का भक्त, क्षमा करने वाला, और शूरवीर भी है ? या नहीं ? ॥१४॥

नारद उवाच—

नारद जी ने कहा—

"विवस्वानिव तेजस्वी, बृहस्पतिसमो मतो ।
महेन्द्र इव वीरश्च, वसुधेव क्षमान्वितः ॥१५॥

[ अयं श्लोकः अतीव-सरलः, इति केवलं हिन्दी लिख्यते ]

हिन्दी—वह राजकुमार विवस्वान् ( सूर्य ) के समान तेजस्वी, बृहस्पति ( देवताओं के गुरु ) के तुल्य बुद्धिमान्, महेन्द्र के समान वीर और पृथ्वी के सदृश क्षमाशील है ॥१५॥

अश्वपतिरुवाच—

राजा अश्वपति ने पूछा—

अपि राजात्मजो दाता, ब्रह्मण्यश्चापि सत्यवान् ।
रूपवानप्युदारो वाऽप्यथवा प्रियदर्शनः ॥१६॥

[ अयमपि सरलः ]

हिन्दी—क्या वह राजा का पुत्र सत्यवान् दाता भी है ? ब्रह्मण्य, सुन्दर, उदार और देखने में उत्तम भी लगता है ? ॥१६॥

## नारद उवाच—

नारद जी ने उत्तर दिया—

"सांकृते रन्तिदेवस्य, स्वशक्त्या दानतः समः।
ब्रह्मण्यः सत्यवादी च, शिबिरौशीनरो यथा ॥१७॥
ययातिरिव चोदारः, सोमवत् प्रियदर्शनः।
रूपेणान्यतमोऽश्विभ्यां, द्युमत्सेनसुतो बली ॥१८॥
स दान्तः स मृदुः शूरः, स सत्यः संयतेन्द्रियः।
स मैत्रः सोऽनसूयश्च, स ह्रीमान् द्युतिमांश्च सः ॥१९॥
नित्यशश्चार्जवं तस्मिन्, स्थितिस्तस्यैव च ध्रुवा।
संक्षेपतस्तपो वृद्धैः, शीलवृद्धैश्च कथ्यते ॥२०॥"

[ ये सब श्लोक भी अत्यन्त सरल हैं। व्याख्या अनावश्यक है हिन्दी ही केवल लिखी जाती है। ]

हिन्दी—'वह द्युमत्सेन का पुत्र बड़ा बलवान् है, अपनी शक्ति और दान के कारण वह संकृति के पुत्र रन्तिदेव के समान है, उशीनर के पुत्र शिबि के समान ब्रह्मण्य और सत्यवादी है। ययाति के तुल्य उदार, सोम ( चन्द्रमा ) के सदृश प्रियदर्शन, रूप में अश्विनी कुमार के तुल्य है, वह जितेन्द्रिय है, कोमलस्वभाव है, शूरवीर है, सत्यवादी है, उसकी इन्द्रियाँ संयत हैं—चञ्चल नहीं हैं, सबके साथ मित्रता का व्यवहार रखता है, किसी से असूया नहीं रखता, बड़ा लज्जावान् है, और तेजस्वी है। संक्षेप से तपोवृद्ध तथा शील-सम्पन्न महापुरुष उसके विषय में कहते हैं कि उसमें सरलता नित्य निवास करती है और सरलता की स्थिति उसमें निश्चल रूप से हो गयी है ॥१७–२०॥

## अश्वपतिरुवाच—

अश्वपति ने कहा—

गुणैरुपेतं सर्वैस्तं, भगवन्! प्रब्रवीषि मे।
दोषानप्यस्य मे ब्रूहि, यदि सन्तीह केचन ॥२१॥

अन्वयः—भगवन्! सर्वैः गुणैः उपेतं तं मे प्रब्रवीषि, यदि इह केचन ( दोषाः ) सन्ति, अस्य दोषान् अपि मे ब्रूहि ॥२१॥

व्याख्या — भगवन् ! = नारद ! सर्वैः = सम्पूर्णैः गुणैः = शौर्यादिभिः उपेतं = युक्तं तं = सत्यवन्तं मे = मह्यं प्रब्रवीषि = कथयसि, किन्तु यदि इह = अस्मिन् बालके, केचन = केचित् दोषाः सन्ति = विद्यन्ते. ( तर्हि ) अस्य तान् दोषान् = दुर्गुणानपि मे = मह्यं ब्रूहि = कथय । दोषगुणविवेचनपूर्वकमेव वरस्य वरणमुचितम्, अन्यथा पश्चात्तापः स्यात्, इति भावः ॥२१॥

हिन्दी—अश्वपति ने कहा - भगवन् ! नारद ! आप इसके गुणों का तो विस्तृत वर्णन कर ही रहे हैं, यदि कुछ दोष इसमें हों तो कृपया उन्हें भी बता दीजिये [ ऐसा न हो कि अन्त में पछताना पड़े । सभी दोष गुण विचारकर कन्या देनी चाहिये ] ॥ २१ ॥

नारद उवाच—

नारद ने उत्तर दिया—

एक एवास्य दोषो हि, गुणानाक्रम्य तिष्ठति ।
स च दोषः प्रयत्नेन, न शक्यमतिवर्तितुम् ॥२२॥

अन्वयः—अस्य एक एव हि दोषः गुणान् आक्रम्य तिष्ठति, स च दोषः प्रयत्नेन न अतिवर्तितुं शक्यम् ॥२२॥

व्याख्या—अस्य = सत्यवतः एक एव हि = केवलमेक एव हि दोषः गुणान् आक्रम्य = गुणानधिष्ठाय तिष्ठति ( एवंविधः प्रबलो दोषः एकोऽस्ति, यः सर्वानपि गुणान् अधरीकरोति, इति तत्त्वम् ) । स च दोषः प्रयत्नेन = केनापि यत्नेन अतिवर्तितुं = दूरीकर्तुं न शक्यम् = निवारयितुं न शक्यते, इत्यर्थः ॥२२॥

हिन्दी—नारद जी ने कहा—राजन् ! इस लड़के में एक ही प्रबल दोष है, जो सम्पूर्ण गुणों को दबाए बैठा है, और उसका प्रतीकार भी यत्नों से नहीं हो सकता है ॥२२॥

एको दोषोऽस्ति नान्योऽस्य, सोऽद्यप्रभृति सत्यवान् ।
संवत्सरेण क्षीणायु, र्देहन्यासं करिष्यति ॥२३॥

अन्वयः— राजन् ! अस्य एको दोषोऽस्ति, नाऽन्यः, अद्यप्रभृति सः सत्यवान् संवत्सरेण क्षीणायुः ( सन् ) देहन्यासं करिष्यति ॥२३॥

व्याख्या—राजन् ! अस्य = सत्यवतः एको दोषोऽस्ति = दुर्गुणोऽस्ति, अन्यः = अतोऽपरो न, अद्यप्रभृति = अद्यारभ्य सः = सत्यवान् क्षीणायुर्भूत्वा = अल्पायुः सन् देहस्य = शरीरस्य न्यासं = परित्यागं करिष्यति। एकस्मिन् वर्षे स मरिष्यतीत्यर्थः ॥२३॥

हिन्दी—राजन् ! सत्यवान् में एक ही प्रबल दोष है कि वह आज से पूरे एक वर्ष में क्षीण आयु होकर शरीर त्याग कर देगा। [ अतः ऐसे लड़के के साथ जान-बूझकर कन्या का विवाह करना भय से खाली नहीं है, सोच-समझ लीजिये ॥

राजोवाच—

राजा ने—सावित्री से—कहा—

एहि सावित्रि ! गच्छस्व, अन्यं वरय शोभने ! ।
तस्य दोषो महानेको, गुणानाक्रम्य च स्थितः ॥२४॥

अन्वयः—हे शोभने ! सावित्रि ! एहि गच्छस्व, अन्यं वरय, तस्य एकः महान् दोषो गुणान् आक्रम्य च स्थितः ॥२४॥

व्याख्या—हे शोभने ! = कल्याणि ! सावित्रि ! एहि = अत्रागच्छ, गच्छस्व = गच्छ अन्यं = कमपि वरय = स्वीकुरु, यतः तस्य = सत्यवतः एको महान् = प्रबलो दोषो = दुर्गुणः गुणान् आक्रम्य स्थितः = तिष्ठति ॥२४॥

हिन्दी—पुत्रि ! सावित्री ! सुन, इधर आ, फिर जा, और किसी अन्य वर का अन्वेषण कर, क्योंकि सत्यवान् में एक ऐसा प्रबल दोष विद्यमान है, जो सभी गुणों को दबाए हुए है ॥२४॥

यथा मे भगवानाह, नारदो देवसत्कृतः ।
संवत्सरेण सोऽल्पायु, र्देहन्यासं करिष्यति ॥२५॥

अन्वयः—देव-सत्कृतो भगवान् नारदो यथा मे आह—सः संवत्सरेण अल्पायुः सन् देहन्यासं करिष्यति ॥२५॥

व्याख्या—देवसत्कृतः = देवैः इन्द्रादिभिः सत्कृतः सम्मानितः भगवान् = सर्वैश्वर्यसम्पन्नः नारदो मे = मह्यं आह = ब्रवीति, यत् सः सम्वत्सरेण = एकस्मिन् वर्षे एव अल्पायुः = स्वल्पावस्थः सन् देहस्य = शरीरस्य न्यासं = परित्यागं करिष्यति = विधास्यति ॥२५॥

हिन्दी—पुत्रि ! जिनका सम्मान सदा देवगण भी करते हैं, वे भगवान् नारद मुनि मुझसे कह रहे हैं कि आज से एक वर्ष में अल्पायु होने के कारण वह सत्यवान् शरीर त्याग कर देगा। [ अतः उसके साथ सम्बन्ध किस प्रकार स्थिर किया जा सकता है, इसी से मैं कह रहा हूँ कि किसी अन्य वर को ढूँढने के लिये पुनः यात्रा करो। ] ॥२५॥

सावित्र्युवाच—

सावित्री ने उत्तर दिया—

सकृदंशो निपतति, सकृत् कन्या प्रदीयते।
सकृदाह ददानीति, त्रीण्येतानि सकृत् सकृत् ॥२६॥

अन्वयः—अंशः सकृत् निपतति, कन्या सकृत् प्रदीयते, "ददानि" इति सकृत् आह, एतानि त्रीणि सकृत्-सकृत् भवन्ति ॥२६॥

व्याख्या—अंशः = काष्ठपाषाणादेः शकलः सकृत् = एकवारमेव निपतति = पृथक् भवति, कन्या, सकृत् = एकवारमेव प्रदीयते, "ददानि" कस्मैचित् किंचित् वस्तु "ददानि" इति सकृदेव आह भद्रपुरुषः इत्यर्थः, एतानि त्रीणि वस्तूनि सकृत्-सकृत् भवन्ति, नतु वारंवारमिति भावः ॥२६॥

हिन्दी—काष्ठ-पाषाण आदि टुकड़ा एक ही वार गिरता है, कन्या एक ही वार दी जाती है और "देता हूँ" इस प्रकार कोई भला मनुष्य एक वार ही कहा करता है, सिद्ध है—ये तीनों एक वार ही होते हैं, वार-वार नहीं ॥२६॥

दीर्घायुरथवाल्पायुः, सगुणो निर्गुणोऽपि वा।
सकृद् वृतो मया भर्ता, न द्वितीयं वृणोम्यहम् ॥२७॥
मनसा निश्चयं कृत्वा, ततो वाचाऽभिधीयते।
क्रियते कर्मणा पश्चात्, प्रमाणं मे मनस्ततः ॥२८॥

अन्वयः—दीर्घायुः अथवा अल्पायुः, सगुणो वा स्यात् निर्गुणोऽपि वा स्यात्, मया भर्ता सकृद् वृतः पुनरहं द्वितीयं न वृणोमि ॥२७॥

मनसा निश्चयं कृत्वा ततः वाचा अभिधीयते, पश्चात् कर्मणा क्रियते, ततो मे मम ( एवात्र ) प्रमाणमस्तीति शेषः ॥२८॥

व्याख्या—दीर्घायुः स्यात् स्वल्पायुर्वा, सगुणः = गुणसहितो वा स्यात् निर्गुणः = गुणरहितो वा भवेत्, मया भर्ता = पतिः सकृत् = एकवारमेव वृतः = सुनिश्चयं कृत्वा स्वीकृतः इदानीमहम् द्वितीयं न वृणोमि = स्वीकरोमि ॥२७॥

स्वकर्तव्यं पूर्वं मनसा = स्वचित्तेन निश्चयं कृत्वा=सम्यङ् निर्णीय, ततोऽनन्तरं वाचा = वाण्या अभिधीयते = कथ्यते पश्चात् तदनुकर्मणा = क्रियया क्रियते, ततः मे = मम मनः चित्तमेव अत्र विषये प्रमाणमस्ति, ममास्मिन् विषये सन्देहो नास्ति ॥२८॥

हिन्दी—सगुण हो या निर्गुण, स्वल्पायु हो अथवा दीर्घायु, मैंने तो अपने पति को भलीभाँति निश्चय पूर्वक स्वीकार किया है ॥२७॥

कोई भी कर्तव्य पहले मन से निश्चय किया जाता है, अनन्तर वाणी से कहा जाता है फिर वह क्रिया का रूप धारण करता है, ठीक इसी नियम के अनुसार मैंने निर्णय के साथ ही पति स्वीकार किया है इस विषय में मेरा मन प्रमाण है। [ आपको विशेष चिन्ता नहीं करनी चाहिये ] ॥२८॥

नारद उवाच—

नारदजी ने—राजा से-कहा—

स्थिरा बुद्धिर्नरश्रेष्ठ ! सावित्र्या दुहितुस्तव ।
नैषा वारयितुं शक्या, धर्मादस्मात्कथचन ॥२९॥

अन्वय.—हे नरश्रेष्ठ ! तव दुहितुः सावित्र्याः बुद्धिः स्थिरा ( अस्ति ), एषा अस्मात् धर्मात् कथंचन वारयितुं न शक्या ॥२९॥

व्याख्या—हे नरश्रेष्ठ ! = राजन् ! तव = भवतो दुहितुः = कन्यायाः बुद्धिः = मतिः स्थिरा = सुदृढा वर्तते, एषा = इयं अस्मात् = एतस्मात् धर्मात् कथंचन = कथमपि वारयितुं = निवर्तयितुं न शक्या ॥२९॥

हिन्दी—राजन् ! तुम्हारी पुत्री सावित्री की बुद्धि सु निश्चित है, यह किसी प्रकार भी इस धर्म से हटायी नहीं जा सकती ॥२९॥

नान्यस्मिन् पुरुषे सन्ति, ये सत्यवति वै गुणाः ।
प्रदानमेव तस्मान्मे, रोचते दुहितुस्तव ॥३०॥

अन्वयः—राजन् ! किंच–सत्यवति ये गुणाः ये वै गुणाः ( सन्ति ), ते अन्यस्मिन् पुरुषे न सन्ति, तस्मात्–तव दुहितुः प्रदानमेव मे रोचते ॥३०॥

व्याख्या—राजन् ! किञ्च—सत्यवति ये गुणाः सन्ति, ते अन्यस्मिन् पुरुषे न सन्ति ततश्च तव कन्यायाः तस्मै प्रदानमेव मह्यं रोचते=हितकरं प्रतीयते। अतो विलम्बो न कार्यः, सत्वरमेव कन्या प्रदीयताम्, इति भावः ॥३०॥

हिन्दी—राजन् ! सचमुच सत्यवान् में जो गुण विद्यमान हैं, वे किसी अन्य पुरुष में नहीं हैं, अतः मेरी सम्मति भी यही है कि उसी सत्यवान् को ही कन्या दे देना चाहिये। [ भवितव्यता को कौन टाल सकता है ? जीव अपने भाग्यवश शुभ अथवा अशुभ फल भोगा करता है, अतः इस विषय में अब चिन्ता नहीं करनी चाहिये। ] ॥३०॥

राजोवाच—

राजा ने कहा—

अविचाल्यमेतदुक्तं, तथ्यं च भवता वचः।
करिष्याम्येतदेवं च, गुरुर्हि भगवान् मम ॥३१॥

अन्वयः—भवता एतत् वचः अविचाल्यं तथ्यं च उक्तम्। एतदेवं च करिष्यामि, हि भगवान् मम गुरुः ( अस्ति ) ॥३१॥

व्याख्या—हे मुने ! भवता=त्वया एतत्=इदं वचः=वचनं अविचाल्यं =सुदृढं तथ्यं=सत्यं च उक्तम्। एतत्=इदं एवं च=एवमेव करिष्यामि, हि=यतः भगवान् मम=मे गुरुः पूज्यः=अस्ति, "गुरूणां आदेशः सन्देहं विनैव पालनीयः" इत्यस्ति शास्त्रकाराणां नियमः ॥३१॥

हिन्दी—मुने ! आपने यह वचन सुदृढ, सुनिश्चित, सत्य ही कहा है। ऐसे ही करूँगा। आप तो मेरे गुरु हैं। आपकी आज्ञा में मुझे किञ्चित् भी सन्देह नहीं है ॥ ३१ ॥

नारद उवाच—

नारद जी ने कहा—

अविघ्नमस्तु सावित्र्याः, प्रदाने दुहितुस्तव।
साधयिष्याम्यहं तावत्, सर्वेषां भद्रमस्तु वः ॥३२॥

अन्वयः—तव दुहितुः सावित्र्याः प्रदाने अविघ्नमस्तु, अहं तावत् साधयिष्यामि, वः सर्वेषां भद्रमस्तु ॥३२॥

व्याख्या—राजन् ! तव = भवतः दुहितुः = सुतायाः सावित्र्याः प्रदाने = दाने अविघ्नम् = विघ्नाभावः अस्तु = भवतु, अहं तावत् = इदानीं साधयिष्यामि = गच्छामि, वः सर्वेषां भद्रं = मङ्गलं अस्तु = भवतु ॥३२॥

हिन्दी—राजन् ! तुम्हारी पुत्री सावित्री के प्रदान में किसी प्रकार का विघ्न न हो; अब मैं जाता हूँ, आप सब लोगों का मङ्गल हो ॥३२॥

मार्कण्डेय उवाच—

मार्कण्डेय जी ने युधिष्ठिर से कहा—

एवमुक्त्वा समुत्पत्य, नारदस्त्रिदिवं गतः।
राजापि दुहितुः सज्जं वैवाहिकमकारयत् ॥३३॥

अन्वयः—नारदः एवम् उक्त्वा समुत्पत्य त्रिदिवं गतः। राजा अपि दुहितुः वैवाहिकं सज्जं अकारयत् ॥३३॥

व्याख्या—नारदः एवं = उक्तप्रकारेण उक्त्वा = कथयित्वा समुत्पत्य = उड्डीय त्रिदिवं = स्वर्गं गतः = ययौ। राजा अपि दुहितुः = सावित्र्याः वैवाहिकं = विवाहकार्यं सज्जं = सुसज्जितं अकारयत् = कारयामास ॥३३॥

हिन्दी—भगवान् नारद जी ऐसा कहकर उड़कर स्वर्ग में चले गये, इधर राजा भी अपनी पुत्री सावित्री के विवाह की पूरी तैयारी करने लगा ॥३३॥

द्वितीयोऽध्यायः समाप्तः। [ २ ]

—:o:—

## अथ तृतीयोऽध्यायः [ ३ ]

मार्कण्डेय उवाच—

मार्कण्डेय ने कहा—

अथ कन्या-प्रदाने स, तमेवार्थं विचिन्तयन्।
समानिन्ये च तत्सर्वं, भाण्डं वैवाहिकं नृपः ॥ १ ॥

अन्वयः—अथ स नृपः कन्या-प्रदाने तमेव अर्थं विचिन्तयन् तत् सर्वं वैवाहिकं भाण्डं च समानिन्ये ॥ १ ॥

व्याख्या—अथ = नारद-गमनानन्तरं स नृपः = अश्वपतिः कन्यायाः सुतायाः सावित्र्याः प्रदाने तमेव = पूर्वोक्तमेव अर्थं = वृत्तं विचिन्तयन् = विचारयन् अथवा तमेव विवाहरूपमेवार्थं कथं कार्यं कार्यं इति विचिन्तयन् तत् सर्वं = अखिलं वैवाहिकं = विवाह-सम्बन्धि भाण्डं = वस्तुजातं च समानिन्ये = आनयामास ॥ १ ॥

हिन्दी—नारद मुनि के चले जाने के अनन्तर राजा ने विवाह की चिन्ता करते हुए सब विवाह की सामग्री मँगाई ॥ १ ॥

ततो वृद्धान् द्विजान् सर्वान्, ऋत्विजः स-पुरोहितान् ।
समाहूय दिने पुण्ये, प्रययौ सह कन्यया ॥ २ ॥

अन्वयः—ततः ( राजा ) सर्वान् वृद्धान् द्विजान्, सपुरोहितान् ऋत्विजः समाहूय पुण्ये दिने कन्यया सह प्रययौ ॥ २ ॥

व्याख्या—ततः = अनन्तरं ( राजा ) सर्वान् = अखिलान् वृद्धान् द्विजान् = स्थविरान् ब्राह्मणान्, सपुरोहितान् = पुरोहितैः सहितान् ऋत्विजः = अग्निहोत्रकारिणः समाहूय = आकारयित्वा, पुण्ये = शुभे दिने कन्यया = सावित्र्या सह प्रययौ = कन्यां दातुं सत्यवतः आश्रमं प्रति जगाम ॥ २ ॥

हिन्दी—इसके बाद में वृद्ध ब्राह्मणों, पुरोहितों तथा ऋत्विजों को बुलाकर कन्या के साथ राजा शुभ दिन में सत्यवान् के आश्रम में गये ॥ २ ॥

मेध्यारण्यं स गत्वा च, द्युमत्सेनाश्रमं नृपः ।
पद्भ्यामेव द्विजैः सार्धं, राजर्षिं तमुपागमत् ॥ ३ ॥

अन्वयः—स नृपः मेध्यारण्यं गत्वा द्युमत्सेनाश्रमं द्विजैः सार्धं पद्भ्यामेव तं राजर्षिं उपागमत् ॥ ३ ॥

व्याख्या—स नृपः = अश्वपतिः मेध्यारण्यं = पवित्रवनं गत्वा, द्युमत्सेनाश्रमं = द्युमत्सेनाश्रमे द्विजैः = ब्राह्मणैः पुरोहितादिभिः सार्धं = सह पद्भ्यामेव = पदातिरेव तं राजर्षिं = द्युमत्सेनं उपागमत् = प्राप ॥ ३ ॥

हिन्दी—राजा अश्वपति उस पवित्र आश्रम में, वन में, पहुँच कर ब्राह्मणों के साथ पैदल ही राजर्षि द्युमत्सेन के पास पहुँचे ॥ ३ ॥

तत्रापश्यन्महाभागं, शालवृक्षमुपाश्रितम् ।
कौश्यां बृस्यां समासीनं, चक्षुर्हीनं नृपं तदा ॥ ४ ॥

अन्वयः—तदा तत्र महाभागं चक्षुर्हीनं नृपं शालवृक्षमुपाश्रितम्, कौ बृस्यां समासीनं अपश्यत् ॥ ४ ॥

व्याख्या— तदा = तस्मिन् समये महाभागं = महोदयं चक्षुर्हीनं = नेत्र-र नृपं = द्युमत्सेनं "शाल"वृक्षमुपाश्रितम् = शालवृक्षस्य नीचैः स्थितं कौश्यां कुशैर्निर्मितायां बृस्यां = आसने ऋषीणामासनं "बृसी" इत्युच्यते ) आसी उपविष्टं अपश्यत् = ददर्श ॥ ४ ॥

हिन्दी—राजा अश्वपति ने उस वन में पहुँच कर "शाल" वृक्ष के नी कुशा के आसन पर बैठे हुए नेत्र-हीन तपस्वी राजर्षि द्युमत्सेन को देखा ॥ ४

स राजा तस्य राजर्षेः, कृत्वा पूजां यथार्हतः ।
वाचा सुनियतो भूत्वा, चकारात्म-निवेदनम् ॥ ५ ॥

अन्वयः— स राजा तस्य राजर्षेः यथार्हतः पूजां कृत्वा, वाचा सुनिय भूत्वा, आत्मनिवेदनं चकार ॥ ५ ॥

व्याख्या—स राजा = नृपः अश्वपतिः तस्य = राजर्षेः द्युमत्सेनस्य यथार्ह =यथायोग्यां पूजां = सत्कारं कृत्वा = विधाय वाचा = वाण्या सुनियतो = विनी भूत्वा आत्मनः = स्वस्य निवेदनं = स्वपरिचयमित्यर्थः चकार = कृतवान् ॥ ५ ॥

हिन्दी— राजा अश्वपति ने उस राजर्षि की यथोचित पूजा की और विनी भाव से अपना परिचय प्रदान किया ॥ ५ ॥

तस्याऽर्घ्यमासनं चैव, गां चावेद्य स धर्मवित् ।
किमागमनमित्येव, राजा राजानमब्रवीत् ॥ ६ ॥

अन्वयः— स धर्मवित् राजा ( द्युमत्सेनः ) तस्य ( अश्वपतेः ) अर्घ्यम्, आसनम् गां च आवेद्य "किं आगमनम् ?" इत्येव राजानं अब्रवीत् ॥ ६ ॥

व्याख्या—स धर्मवित् = धर्मज्ञः राजा = द्युमत्सेनः तस्य = तस्मै इत्यर्थः अश्वपतये अर्घ्यं, आसनं, गां = धेनुं भूमिं सत्कारवाचं वा आवेद्य = समर्प्य किं आगमनस्य प्रयोजनमिति राजानं = अश्वपतिं अब्रवीत् ॥ ६ ॥

हिन्दी— धर्मज्ञ राजा द्युमत्सेन ने अर्घ्य, आसन, और निवास के योग्य

चित भूमि ( अथवा धेनु, या प्रिय वाणी बोल कर ) देकर "आगमन का प्रयो-न क्या है ?" पूछा ॥ ६ ॥

तस्य सर्वमभिप्राय, मितिकर्तव्यतां च ताम् ।
सत्यवन्तं समुद्दिश्य, सर्वमेव न्यवेदयत् ॥ ७ ॥

अन्वयः—( राजा अश्वपतिः ) तस्य सर्वमभिप्रायं इति कर्तव्यतां च सत्यवन्तं समुद्दिश्य सर्वमेव न्यवेदयत् ॥ ७ ॥

व्याख्या—राजा अश्वपतिः तस्य = स्वस्य सर्वं = अखिलं अभिप्रायं = आशयं इति कर्तव्यतां = कर्तव्यञ्च सत्यवन्तं समुद्दिश्य = लक्षीकृत्य सर्वमेव = सम्पूर्ण-मेव न्यवेदयत् = निवेदितवान् । "अहं सत्यवन्तं स्वीकर्तुमत्र समागतोऽस्मि" इत्यादि सम्पूर्णं वृत्तं निवेदितवान् इति भावः ॥ ७ ॥

हिन्दी—भगवन् ! मैं सत्यवान् को अपनी पुत्री देने के उद्देश्य से आया हूँ, अब इस विषय में आप की सम्मति चाहिये, यही मेरे आगमन का प्रयोजन है, राजा अश्वपति ने निवेदन किया ॥ ७ ॥

अश्वपतिरुवाच—

अश्वपति ने कहा—

सावित्री नाम राजर्षे !, कन्येयं मम शोभना ।
तां स्वधर्मेण धर्मज्ञ !, स्नुषार्थे त्वं गृहाण मे ॥ ८ ॥

अन्वयः—राजर्षे ! मम इयं सावित्री नाम शोभना कन्या ( अस्ति ) । हे धर्मज्ञ ! तां स्वधर्मेण त्वं मे स्नुषार्थे गृहाण ॥ ८ ॥

व्याख्या—राजर्षे ! मम इयं = एषा सावित्री नाम्नी शोभना = सुन्दरी कन्या ( अस्ति ), हे धर्मज्ञ ! तां = एतां स्वधर्मेण = स्वधर्मानुसारं त्वं मे = मत्सकाशात् स्नुषार्थे = पुत्रवधूरूपेण गृहाण = स्वीकुरु ॥ ८ ॥

हिन्दी—राजर्षे ! मेरी यह परम सुन्दरी कन्या सावित्री है, मैं आपसे प्रार्थना करता हूँ कि आप इसको अपनी पुत्रवधू के रूप में धर्म के अनुसार स्वीकार करलें ॥८॥

द्युमत्सेन उवाच—

द्युमत्सेन ने कहा—

च्युताः स्म राज्यात्, वनवासमाश्रिता, श्चराम धर्मं नियतास्तपस्विनः ।

कथं त्वनर्हा वनवासमाश्रमे, निवत्स्यते क्लेशमिमं सुता तव ॥९॥

अन्वयः—( राजन् ! वयं ) राज्यात् च्युताः स्म, वनवासमाश्रिताः नियताः तपस्विनः धर्मं चरामः। तव सुता अनर्हा ( सती ) आश्रमे इमं क्लेशं वनवासं ( वहन्ती ) कथं निवत्स्यते ? ॥९॥

व्याख्या— राजन् ! वयं राज्यात् च्युताः स्म = भ्रष्टराज्याः स्मः, वनवासमाश्रिताः = अरण्यवासमाश्रिताः, नियताः = नियमयुक्ताः तपस्विनो भूत्वा धर्मं चरामः = धर्माचरणं कुर्मः, इयं तव = भवतः सुता = कन्या अनर्हा = वनवासाऽयोग्या सती आश्रमे इमं क्लेशं = क्लेशरूपं वनवासं वहन्ती कथं निवत्स्यते ? = कथं निवसिष्यति ॥९॥

हिन्दी—राजन् ! हमारा राज्य तो हम से छिन गया है, वन में निवास करते हुए, नियम पालन करते हुये धर्माचरण कर रहे हैं; यह आप की कन्या वनवास के अपार कष्टों को अभी जानती भी नहीं है, फिर बताओ, किस प्रकार इस क्लेशस्वरूप वनवास को सहन करती हुई आश्रम में रह सकेगी ? ॥९॥

अश्वपतिरुवाच—

राजा अश्वपति ने कहा—

सुखं च दुःखं च भवाभवात्मकं, यदा विजानाति सुताऽहमेव च।
नमद्विधे युज्यति वाक्यमीदृशं, विनिश्चये नाभिगतोऽस्मि ते नृप ! ॥१०॥

अन्वयः—राजर्षे ! सुखं च दुःखं च भवाभवात्मकं यदा सुता विजानाति, अहमेव च ( विजानामि ) मद्विधे ईदृशं वाक्यं न युज्यति, नृप ! विनिश्चयेन ते अभिगतोऽस्मि ॥१०॥

व्याख्या—हे राजर्षे ! सुखं च दुःखं च भवाऽभवात्मकं = उत्पत्ति-विनाश-शालि, अनित्यमित्यर्थः, यदा सुता विजानाति = वेत्ति, अहमेव च विजानामि, मद्विधे = मादृशे जने ईदृशं = एवंविधं वाक्यं न युज्यति = न युक्तम्, हे नृप ! = राजन् ! विनिश्चयेन = निश्चयं कृत्वा ते = तव समीपे अभिगतोऽस्मि = समायातोऽस्मि ॥१०॥

हिन्दी—राजन् ! सुख दुःख तो आने-जाने वाली वस्तु है, मेरी पुत्री और मैं जानता हूँ, मुझ जैसों के लिये इसप्रकार के वाक्य अच्छे नहीं लगते, मैं पूर्ण निश्चय करके यहाँ आप के पास आया हूँ ॥१०॥

आशां नार्हसि मे हंतुं, सौहृदात् प्रणतस्य च ।
अभितश्चागतं प्रेम्णा, प्रत्याख्यातुं न मार्हसि ॥११॥

अन्वयः—सौहृदात् प्रणतस्य च मे आशां हन्तुं न अर्हसि, प्रेम्णा अभितः आगतं मां च प्रत्याख्यातुं न अर्हसि ॥११॥

व्याख्या—राजेन्द्र ! सौहृदात् = सुहृद्भावात् प्रणतस्य=विनीतस्य च मे आशां हन्तुं=विनाशयितुं न अर्हसि=न योग्योऽसि, आशाविघातः सर्वथा अनुचितः। प्रेम्णा=प्रीत्या अभितः=समन्तात् आगतं=अभ्यागतं मां प्रत्याख्यातुं न अर्हसि= न योग्योऽसि ॥११॥

हिन्दी—राजन् ! मित्रभाव तथा परमस्नेह से विनम्र होकर मैं आपके पास आया हूँ, आपको मेरी आशा का विघात करना उचित नहीं है। मेरा निराकरण करना आपके योग्य नहीं है ॥११॥

अनुरूपो हि युक्तश्च, त्वं ममाहं तवापि च ।
स्नुषां प्रतीच्छ मे कन्यां, भार्यां सत्यवतस्ततः ॥१२॥

अन्वयः—हि त्वं मम, तव च अहमपि युक्तः, अनुरूपः, ततः मे कन्यां सत्यवतः भार्यां स्नुषां प्रतीच्छ ॥१२॥

व्याख्या—राजन् ! हि=यतः त्वं=भवान् मम, अहमपि च तव युक्तः = उचितः अनुरूपो = योग्यः, युक्तः खलु आवयोः सम्बन्धः, इति भावः, ततः = तस्मात् कारणात् मे = मम कन्यां = सावित्रीं सत्यवतो भार्यां = पत्नीं स्नुषां = स्वपुत्रवधूं प्रतीच्छ = स्वीकुरु ॥१२॥

हिन्दी—राजन् ! तुम मेरे, और मैं भी तुम्हारे सर्वथा योग्य हूँ। अतः मेरी कन्या को सत्यवान् की भार्या और अपनी पुत्र-वधू के रूप में आप स्वीकार करिये ! ॥ १२ ॥

द्युमत्सेन उवाच—

द्युमत्सेन ने कहा—

पूर्वमेवाभिलषितः, सम्बन्धो मे त्वया सह ।
भ्रष्टराज्यस्त्वहमिति, तत एतद् विचारितम् ॥१३॥

अन्वयः—पूर्वमेव त्वया सह मे सम्बन्धः अभिलषितः, तु अहं "भ्रष्टराज्यः" इति तत एतद् विचारितम् ॥१३॥

व्याख्या—राजन् ! पूर्वमेव = प्रथममेव त्वया = भवता सह मे = मम सम्बन्धः अभिलषितः = अभीष्ट आसीत् , तु = किन्तु अहं भ्रष्टराज्यः = च्युत-राज्योऽस्मीति ततः एतद् = पूर्वोक्तं विचारितम् ॥१३॥

हिन्दी—राजन् ! आपके साथ सम्बन्ध करने की मेरी इच्छा पहले से ही थी किन्तु "भ्रष्टराज्य हूँ" यह विचार कर ही मैंने अब आपके सामने इस प्रकार अपना विचार उपस्थित किया है ॥१३॥

अभिप्रायस्त्वयं यो मे, पूर्वमेवाभिकांक्षितः ।
स निर्वर्ततु मेऽद्यैव, कांक्षितो ह्यसि मेऽतिथिः ॥१४॥

अन्वयः—तु योऽयं मे अभिप्रायः पूर्वमेव अभिकांक्षितः, स मे अद्यैव निर्वर्ततु, हि ( त्वं ) मे कांक्षितः अतिथिः असि ॥१४॥

व्याख्या—तु = परन्तु योऽयं मे = मम अभिप्रायः = इच्छा पूर्वमेव = प्रथम-मेव अभिकांक्षितः = वाञ्छितः ( अस्ति ) सः मे अद्यैव = अस्मिन्नेव दिने निर्वर्ततु = सम्पन्नो भवतु, हि = यतः ( त्वं ) मे कांक्षितः = अभिलषितः अतिथिः असि = अभ्यागतोऽसि ॥१४॥

हिन्दी—राजन् ! यह अभिप्राय तो मुझे पहले ही से अभीष्ट था, मैं चाहता हूँ, आज ही इस शुभ कार्य की सिद्धि हो जानी चाहिये । आप तो मेरे आदरणीय अतिथि हैं । अतिथि-सत्कार में विलम्ब नहीं होना चाहिये ॥१४॥

ततः सर्वान् समानाय्य, द्विजानाश्रमवासिनः ।
यथाविधि समुद्वाहं, कारयामासतुर्नृपौ ॥१५॥

अन्वयः—ततः आश्रमवासिनः सर्वान् द्विजान् समानाय्य नृपौ यथाविधि समुद्वाहं कारयामासतुः ॥१५॥

व्याख्या – ततः = तदनन्तरं आश्रमवासिनः = आश्रमस्थान् सर्वान् = सम्पूर्णान् द्विजान् = ब्राह्मणान् समानाय्य = आहूय नृपौ = उभौ राजानौ यथाविधि = शास्त्रानुसारं समुद्वाहं = विवाहं कारयामासतुः = सम्पादयामासतुः ॥१५॥

हिन्दी— इसके अनन्तर सभी आश्रमवासी द्विजों को बुलवा कर दोनों राजाओं ने विधिपूर्वक विवाह संस्कार कराया ॥१५॥

दत्त्वा सऽर्थपतिः कन्यां, यथार्ह सपरिच्छदम् ।
ययौ स्वमेव भवनं, युक्तः परमया मुदा ॥१६॥

अन्वयः—सः अश्वपतिः यथार्हं सपरिच्छदम् कन्यां दत्त्वा परमया मुदा युक्तः स्वमेव भवनं ययौ ॥१६॥

व्याख्या — सः = अश्वपतिः यथार्हं = यथोचितं सपरिच्छदं = पारिबर्हसहितं, भूषणालङ्कारसहितमित्यर्थः, यथा स्यात्तथा कन्यां दत्त्वा परमया = अधिकया मुदा = प्रसन्नतया युक्तः = सहितः स्वमेव = स्वकीयमेव भवनं=गृहं ययौ = प्रत्यावृत्तः ॥

हिन्दी—राजा अश्वपति अलंकारादि सहित कन्यादान करके अपने घर लौट आये, वे परम प्रसन्न थे ॥१६॥

सत्यवानपि तां भार्यां, लब्ध्वा सर्व-गुणान्विताम् ।
मुमुदे सा च तं लब्ध्वा, भर्तारं मनसेप्सितम् ॥१७॥

अन्वयः—सत्यवानपि सर्वगुणान्वितां तां भार्यां लब्ध्वा मुमुदे, सा च मनसेप्सितं भर्तारं लब्ध्वा मुमुदे ॥१७॥

व्याख्या—सत्यवानपि तां = सावित्रीं सर्वगुणान्वितां = सर्वैः गुणैः अन्वितां सहितां भार्यां = पत्नीं लब्ध्वा = प्राप्य मुमुदे = प्रसन्नो बभूव, सा = सावित्री च अपि मनसा = चित्तेन ईप्सितं = अभिलषितं भर्तारं=पतिं लब्ध्वा मुमुदे = मुदिता बभौ ॥

हिन्दी—सत्यवान् भी सम्पूर्ण गुणों से युक्त भार्या को पाकर प्रसन्न हो गया, और सावित्री भी मनोनीत पति को पाकर परम प्रसन्न हो गयी ॥१७॥

गते पितरि सर्वाणि, सन्यस्याभरणानि सा ।
जगृहे वल्कलान्येव, वस्त्रं काषायमेव च ॥१८॥

अन्वयः—पितरि गते सा सर्वाणि आभरणानि सन्यस्य वल्कलानि काषायं वस्त्रमेव च जगृहे ॥१८॥

व्याख्या—पितरि = स्वजनके गते = प्रयाते सति सा = सावित्री सर्वाणि = निखिलानि आभरणानि = आभूषणानि सन्यस्य = शरीरात् अवतार्य वल्कलानि काषायं = कषायेन रञ्जितं वस्त्रमेव च जगृहे = स्वीचकार ॥१८॥

हिन्दी—पिता के चले जाने पर सावित्री ने अपने सभी अलंकार उतार दिये और वल्कल तथा काषाय वस्त्र धारण कर लिये ॥१८॥

परिचारैर्गुणैश्चैव, प्रश्रयेण दमेन च।
सर्वकाम-क्रियाभिश्च, सर्वेषां तुष्टिमादधे ॥१९॥

अन्वयः—परिचारैः गुणैश्चैव ( सा ) प्रश्रयेण दमेन च सर्वकाम-क्रियाभिश्च सर्वेषां तुष्टिं आदधे ॥१६॥

व्याख्या—परिचारैः = सेवाकार्यैः, गुणैर्विनम्रतादिसुगुणैः, प्रश्रयेण = नम्रभावेन, दमेन = इन्द्रियाणां दमेन जितेन्द्रियतया सर्वकामक्रियाभिः = सर्वेच्छापूरकक्रियाभिः सा = सावित्री सर्वेषां = परिवारस्य जनानां तुष्टिं = सन्तोषं आदधे = जनयामास ॥१६॥

हिन्दी—सावित्री ने सेवा, सुगुण, नम्रभाव, जितेन्द्रियता, तथा सबके मनोनुकूल कर्तव्यों के द्वारा अपने परिवार के सभी बन्धुओं, पूज्यों को अपने शुभाचरण से प्रसन्न कर दिया ॥१६॥

श्वश्रूं शरीरसत्कारैः, सर्वैराच्छादनादिभिः।
श्वशुरं देवसत्कारै, र्वाचः संयमनेन च ॥२०॥
तथैव प्रियवादेन, नैपुणेन शमेन च।
रहश्चैवोपचारेण, भर्तारं पर्यतोषयत् ॥२१॥

अन्वयः—( सा ) शरीरसत्कारैः सर्वैः आच्छादनादिभिः, श्वश्रूम्, देवसत्कारैः, वाचः संयमनेन च श्वशुरम्; तथैव प्रियवादेन, नैपुणेन, शमेन च, रहः उपचारेण च भर्तारं पर्यतोषयत् ॥२०-२१॥

व्याख्या—सा सावित्री कथं कस्य कस्य सेवां चकार ? इति प्रदर्शयति—सा = सावित्री शरीरस्य=देहस्य सत्कारैः = स्नानादिशरीरोचितसत्कारैः, सर्वैः आच्छादनादिभिः=वस्त्रादिप्रदानैः श्वश्रूम्, पर्यतोषयत् = सन्तोषितवती, देवसत्कारैः = देववत्सत्कारैः, वाचः = वाण्याः संयमनेन = अवरोधनेन च श्वशुरम्; तथैव—प्रियवादेन = प्रियभाषणेन, नैपुणेन = निपुणतया, शमेन = शान्त्या च, रहः = एकान्ते उपचारेण = सत्कारेण च भर्तारम् = स्वपतिं; एवं सर्वान् यथोचितेन = व्यवहारेण प्रसादयामास ॥२०-२१॥

हिन्दी—सावित्री ने अपनी सास को-शरीर सत्कार, तथा अनेक प्रकार के वस्त्रादि प्रदान के द्वारा, ससुरजी को—उनका देवों के समान सम्मान तथा अपनी वाणी के नियन्त्रण द्वारा, इसी प्रकार अपने पति को—प्रियभाषण, निपुणता, शान्ति एवं एकान्त में सेवा द्वारा, सन्तुष्ट कर लिया ॥२०-२१॥

एवं तत्राश्रमे तेषां, तथा निवसतां सताम्।
कालस्तपस्यतां कश्चित्, अपाक्रामत भारत ॥२२॥

अन्वयः—हे भारत ! तदा एवं तत्र आश्रमे निवसतां तपस्यतां तेषां सतां कश्चित् कालः अपाक्रामत ॥२२॥

व्याख्या—हे भारत ! = युधिष्ठिर ! तदा = तस्मिन् समये तत्र आश्रमे निवसतां = कृतनिवासानां तपस्यतां = तपश्चर्यामाचरतां तेषां सतां = सज्जनानां कश्चित् कालः = कतिचिन्मासाः अपाक्रामत = गताः ॥२२॥

हिन्दी—युधिष्ठिर ! उस समय इस प्रकार उस आश्रम में रह कर तपस्या करते हुए उनको कुछ समय बीत गया ॥२२॥

सावित्र्या ग्लायमानाया, स्तिष्ठन्त्यास्तु दिवानिशम्।
नारदेन यदुक्तं तद्, वाक्यं मनसि वर्तते ॥२३॥

अन्वयः—तु दिवानिशम् ग्लायमानायाः तिष्ठन्त्याः सावित्र्या मनसि तद् वाक्यं वर्तते, यत् नारदेन उक्तम् ॥२३॥

व्याख्या—तु = किन्तु दिवानिशं = रात्रिन्दिवं ग्लायमानायाः = खिन्नायाः तिष्ठन्त्या, सावित्र्याः मनसि = चेतसि तद् वाक्यं = वचनं वर्तते स्म, यत् भगवता नारदेन उक्तम् = पूर्वं कथितम्। सत्यवानेकस्मिन् वर्षे व्यतीते शरीर-त्यागं करिष्यतीति वाक्यं सदा सावित्र्या मनसि वर्तते स्म, इति तत्त्वम् ॥२३॥

हिन्दी—किन्तु सावित्री दिन प्रतिदिन कुछ मुरझाती जा रही थी, उसके मन में नारद मुनि का वाक्य सदा काँटे की तरह पीड़ा पहुँचाता रहता था ॥२३॥

तृतीयोऽध्यायः समाप्तः।

—:०:—

# अथ चतुर्थोऽध्यायः [ ४ ]

## मार्कण्डेय उवाच—

मार्कण्डेय जी ने कहा—

ततः काले बहुतिथे, व्यतिक्रान्ते कदाचन।
प्राप्तः स कालो मर्तव्यं, यत्र सत्यवता नृप ! ॥ १ ॥

अन्वयः– नृप ! ततः बहुतिथे काले व्यतिक्रान्ते कदाचन स कालः प्राप्तः, यत्र सत्यवता मर्तव्यम् ॥ १ ॥

व्याख्या—हे नृप ! = राजन् ! ततः = तदनन्तरं बहुतिथे = अधिके काले = समये व्यतिक्रान्ते = गते सति कदाचन = कस्मिंश्चिद्दिने सः कालः = समयः प्राप्तः = समागतः, यत्र = यस्मिन् समये सत्यवता मर्तव्यम् = देहत्यागः कर्तव्यः ॥१॥

हिन्दी—युधिष्ठिर ! इस प्रकार बहुत सा समय बीत जाने पर वह समय आ गया, जिस में सत्यवान् की मृत्यु होनी थी ॥ १ ॥

गणयन्त्याश्च सावित्र्या, दिवसे दिवसे गते।
यद् वाक्यं नारदेनोक्तं, वर्तते हृदि नित्यशः ॥ २ ॥
चतुर्थेऽहनि मर्तव्यं, इति संचिन्त्य भाविनी।
व्रतं त्रिरात्रमुद्दिश्य, दिवारात्रं स्थिताऽभवत् ॥ ३ ॥

अन्वयः—दिनानि गणयन्त्याः सावित्र्याः दिवसे दिवसे गते यद् वाक्यं नारदेनोक्तं, ( तत् ) नित्यशः हृदि वर्तते ॥ २ ॥

"चतुर्थेऽहनि मर्तव्यम्" इति भाविनी ( सा ) त्रिरात्रं व्रतमुद्दिश्य दिवारात्रं स्थिता अभवत् ॥ ३ ॥

व्याख्या—दिनानि गणयन्त्याः = दिनानां गणनां कुर्वन्त्याः सावित्र्याः दिवसे-दिवसे गते सति = एकस्मिन् एकस्मिन् दिने गते सति, यद् वाक्यं नारदेनोक्तं = कथितं ( तत् ) नित्यशः = प्रतिदिनं हृदि वर्तते = विद्यते, चतुर्थे अहनि = दिने मर्तव्यं मम पतिना, इति शेषः, इति भाविनी = कल्याणवती सा = सावित्री त्रिरात्रं = रात्रित्रयसम्पाद्यं व्रतं उद्दिश्य = लक्ष्यीकृत्य, दिवारात्रं स्थिता = उपविष्टा अभवत् ॥

हिन्दी—सावित्री प्रतिदिन एक एक दिन गिना करती थी सदा नारदजी का वाक्य हृदय में रहता था ॥२॥

"चतुर्थ दिन मृत्यु होगी" ऐसा निश्चय कर सावित्री "त्रिरात्र" व्रत करने के उद्देश्य से रात-दिन बैठी रही ॥३॥

तं श्रुत्वा नियमं तस्याः, भृशं दुःखान्वितो नृपः ।
उत्थाय वाक्यं सावित्रीं, मब्रवीत् परिसान्त्वयन् ॥४॥

अन्वयः—तस्याः तं नियमं श्रुत्वा भृशं दुःखान्वितो नृपः उत्थाय सावित्रीं परिसान्त्वयन् वाक्यमब्रवीत् ॥४॥

व्याख्या—तस्याः = सावित्र्या तं नियमं = व्रतं श्रुत्वा = आकर्ण्य भृशं = अत्यन्तं दुःखितः सन् नृपः = राजा द्युमत्सेनः उत्थाय सावित्रीं परिसान्त्वयन् = शान्तिवाक्यैं बोधयन् वाक्यं = वचनं अब्रवीत् = उवाच ॥४॥

हिन्दी—उस सावित्री के उस नियम का समाचार सुनकर खिन्न राजा द्युमत्सेन उठ कर सावित्री को समझाते हुए कहने लगे ॥४॥

द्युमत्सेन उवाच—

द्युमत्सेन ने कहा—

अतितीव्रोऽयमारम्भ, स्त्वयारब्धो नृपात्मजे !
तिसृणां वसतीनां हि, स्थानं परम-दुश्चरम् ॥५॥

अन्वयः—हे नृपात्मजे ! त्वया अयं अति तीव्रः आरम्भ आरब्धः, हि तिसृणां वसतीनां स्थानं परमदुश्चरं ( भवति ) ॥ ५ ॥

व्याख्या—हे नृपात्मजे ! = नृपपुत्रि ! त्वया = भवत्या अयं = एषः अति-तीव्रः = अतिकठिनः आरम्भः = कार्यं आरब्धः = प्रारब्धम्, हि = यतः तिसृणां वसतीनां = वारत्रयस्य भोजनपरित्यागे स्थानं = अवस्थितिः परमदुश्चरं = कठिनाचरणं भवति । एवंविधः कठिनतम उपवासस्तवायोग्यः ॥ ५ ॥

हिन्दी—राजपुत्री ! तूने यह अत्यन्त तीव्र कार्य आरम्भ किया है । क्योंकि तीन दिन का उपवास अति दुश्चर होता है । [ सावित्री ने "त्रिरात्र" व्रत आरम्भ किया है, तीन रात्रि तक उपवास करेगी, यह अत्यन्त कठिन कार्य है । राजा को इस की प्रबल चिन्ता हुई, इसी से उन्होंने सावित्री को समझाया ] ॥ ५ ॥

सावित्री उवाच—

यह सुन कर सावित्री ने कहा—

न कार्यं स्तात ! सन्तापः, पारयिष्याम्यहं व्रतम् ।

व्यवसायकृतं हीदं, व्यवसायश्च कारणम् ॥ ६ ॥

अन्वयः—हे तात ! सन्तापो न कार्यः, अहं व्रतः पारयिष्यामि, हि इदं व्यवसायकृतं, व्यवसायश्च कारणम् ( अस्य इति शेषः ) ॥ ६ ॥

व्याख्या—हे तात !=पितः। ( भवता ) सन्तापो न कार्यः,=सन्ताप इदानीं नोचितः, अहं व्रतं=त्रिरात्रव्रतं पारयिष्यामि=पूर्णं पालयिष्यामि, हि इदं व्रतं व्यवसाय-कृतं=व्यवसायेन उद्योगेन कृतं विहितं, अस्य व्रतस्य कारणञ्च व्यवसाय उद्योग एवास्ते। [ मया सोद्योगं व्रतमारब्धम्, भवता चिन्ता नैव विधेया, सानन्दं व्रतस्य पूर्तिर्भविष्यतीति मे बलवान् विश्वासोऽस्ति ] इति भावः ॥ ६ ॥

हिन्दी—हे तात ! आप सन्तप्त न हों, मैं अवश्य ही व्रत को पूर्ण कर लूँगी; यह व्रत साहस से पूर्ण होता है, मैंने साहस-उद्योग सहित इसे प्रारम्भ किया है, वही इसका कारण है ॥ ६ ॥

द्युमत्सेन उवाच—

द्युमत्सेन ने कहा—

व्रतं भिन्धीति वक्तुं त्वां, नास्मि शक्तः कथंचन।
पारयस्वेति वचनं, युक्तमस्मद्विधो वदेत् ॥ ७ ॥

अन्वयः—पुत्रि ! 'व्रतं भिन्धि" इति वक्तुं कथंचन शक्तो नास्मि, अस्मद्विधस्तु "पारयस्व" इति युक्तं वचनं वदेत् ॥ ७ ॥

व्याख्या—पुत्रि ! अहं, "त्वं व्रतं=स्वनियमं भिन्धि"=परित्यज, इति वक्तुं कथंचन=कथमपि शक्तो नास्मि=समर्थो न, अस्मद्विधो=मादृशस्तु जनः "पारयस्व"=पूर्णं कुरु इति युक्तं=उचितं वचनं वदेत्=कथयेत्। मया निषेधो न क्रियते, व्रतपूर्तिः कर्तव्या, इत्येव केवलं कथ्यते ॥ ७ ॥

हिन्दी—पुत्री ! "व्रत तोड़ दे" ऐसा कहने के लिये मैं किसी प्रकार भी समर्थ नहीं हूँ। मुझ जैसा मनुष्य तो "व्रत को पूर्ण करो" यही उचित वचन कह सकता है। [ मेरा आशय तो तुझे प्रोत्साहित करना है, अतः धैर्य, विश्वास तथा साहस से व्रत को पूर्ण तत्परता धारण करो ] ॥ ७ ॥

मार्कण्डेय उवाच—

मार्कंडेय ने कहा—

एवमुक्त्वा द्युमत्सेनो, विरराम महामनाः।
तिष्ठन्ती चैव सावित्री, काष्ठभूतेव लक्ष्यते ॥ ८ ॥
श्वोभूते भर्तृमरणे, सावित्र्या भरतर्षभ !।
दुःखान्वितायास्तिष्ठन्त्याः, सा रात्रि र्व्यत्यवर्तत ॥ ९ ॥

अन्वयः—महामनाः द्युमत्सेनः एवमुक्त्वा विरराम, तिष्ठन्ती सावित्री च काष्ठभूता इव लक्ष्यते ॥ ८ ॥

हे भरतर्षभ ! श्वोभूते भर्तृमरणे तिष्ठन्त्याः दुःखान्वितायाः सावित्र्याः सा रात्रि र्व्यत्यवर्तत ॥ ९ ॥

व्याख्या—महामनाः = महाभागः द्युमत्सेनः एवं = इत्थं उक्त्वा = कथयित्वा विरराम = विरतोऽभूत्, किमप्यधिकं न कथितवान् तूष्णीं जातः, सावित्री तिष्ठन्ती=उपविष्टा सती काष्ठभूतेव = काष्ठवत् लक्ष्यते = प्रतीयते स्म ॥ ८ ॥

हे भरतर्षभ = भरतश्रेष्ठ युधिष्ठिर ! श्वोभूते = प्रातर्भाविनि भर्तुः मरणे = मरणनिमित्तं तिष्ठन्त्याः स्थितायाः दुःखान्वितायाः = दुःखेनाभिभूतायाः सावित्र्याः सा रात्रिः = निशा व्यत्यवर्तत - अतिक्रान्ता ॥ ९ ॥

हिन्दी—महामना द्युमत्सेन इस प्रकार कहकर चुप हो गये, इधर बैठी हुई सावित्री काष्ठ के समान दिखाई देने लगी ॥ ८ ॥

प्रातः "मृत्यु होगी" इसी दुःख से दुःखित सावित्री ने बैठे-बैठे ही वह रात्रि वैसे-तैसे बिता दी ॥ ९ ॥

अद्य तद्दिवसं चेति, हुत्वा दीप्तं हुताशनम्।
युगमात्रोदिते सूर्ये, कृत्वा पौर्वाह्णिकीः क्रियाः ॥१०॥
ततः सर्वान् द्विजान् वृद्धान्, श्वश्रूं श्वशुरमेव च।
अभिवाद्यानुपूर्व्येण प्राञ्जलिर्नियता स्थिता ॥११॥

अन्वयः—अद्य तद्दिवसं च इति दीप्तं हुताशनं हुत्वा, सूर्ये युगमात्रोदिते पौर्वाह्णिकीः क्रियाः कृत्वा; ततः सर्वान् वृद्धान्, द्विजान्, श्वश्रूं, श्वशुरमेव च आनुपूर्व्येण अभिवाद्य नियता प्राञ्जलिः स्थिता ॥१०-११॥

व्याख्या—ततः = रात्रेर्गमनान्तरं प्रातरेव अद्यैव तत् भर्तुः प्राणप्रयाणस्य दिनमस्तीति विचार्य दीप्तं = समृद्धं प्रज्वलितं हुताशनं = अग्निं हुत्वा = अग्निहोत्रं विधाय, सूर्ये = दिनकरे युगमात्रोदिते = हस्तचतुष्कप्रमाणे उदिते पौर्वाह्णिकीः = मध्याह्नतः पूर्वाः क्रियाः = पूजनादिकं कृत्वा ततः = तदनन्तरं सर्वान् = अखिलान् वृद्धान् = स्थविरान्, द्विजान् = ब्राह्मणान, श्वश्रूं = भर्तुर्मातरं, श्वशुरं = तज्जनकं च, आनुपूर्व्येण = क्रमशः यथोचितरूपेण अभिवाद्य नियता = नियमवती प्राञ्जलिः = बद्धाञ्जलिः स्थिता = तस्थौ ॥१०–११॥

हिन्दी—"आज ही वह दिन है" इसलिये प्रातःकाल सूर्य भगवान् के चार हाथ प्रमाण से उगते-उगते ही सावित्री ने आह्निक क्रियायें कीं. हवन किया, और सभी बूढ़ों, ब्राह्मणों, सास ससुर को उचित रीति से क्रमशः प्रणाम किया, तथा हाथ जोड़कर खड़ी रही ॥१०–११॥

अवैधव्याशिषस्ते तु, सावित्र्यर्थं हिताः शुभाः ।
ऊचुस्तपस्विनः सर्वे, तपोवननिवासिनः ॥१२॥

अन्वयः—ते तु सर्वे तपोवन-निवासिनः तपस्विनः सावित्र्यर्थं हिताः शुभाः अवैधव्याशिषः ऊचुः ॥१२॥

व्याख्या—ते तु सर्वे तपोवननिवासिनः = आश्रमवासिनः तपस्विनः = तपोधनाः सावित्र्यर्थं = सावित्र्यै हिताः = हितकारिणीः शुभाः = मांगलिकीः अवैधव्याशिषः = सौभाग्यस्य दर्शिनीः आशिषः = शुभाशीर्वादान् ऊचुः = उच्चारयामासुः ॥१२॥

हिन्दी—उन सभी तपोवननिवासी तपस्वियों ने सावित्री के लिये हितकारी, शुभ सौभाग्यवती होने के लिये आशीर्वाद प्रदान किये ॥१२॥

एवमस्त्विति सावित्री, ध्यानयोगपरायणा ।
मनसा ताः गिरः सर्वाः, प्रत्यगृह्णत्तपस्विनाम् ॥१३॥

अन्वयः—ध्यानयोगपरायणा सावित्री "एवमस्तु" इति ताः तपस्विनः सर्वाः गिरः मनसा प्रत्यगृह्णात् ॥ १३ ॥

व्याख्या—ध्यानयोगे = ध्याने परायणा संलग्ना सावित्री ... ग